कार्ति ५ ॥ वेदोक्तानांपुराणानांजागरात्पु... द्गजजगदानंदकारकम् ॥ भुक्तिमुक्तिप्रदंवंदेमाधवंभक्तवत्सलम् ॥ १ ॥
र्द्धि संदेहोसप्तद्वीपवतीफलम् ॥ सर्वेषामे ... वरमापतिम् ॥ चतुर्वक्रोनमस्कृत्यपप्रच्छपितरंमुदा ॥ २ ॥ ब्रह्मोवाच ॥
जागरंवैप्रकुर्वंतिकर्मणामनसा ... तन ॥ प्रष्टव्यंब्रूहिमेदेवसर्वज्ञसकलेश्वर ॥ ३ ॥ मासानांमार्गशीर्षोहमित्युक्तं
कुरुतेजागरंनिशि ॥ ४३ ... त्म्यंज्ञातुमिच्छामितत्त्वतः ॥ ४ ॥ कोदेवःकस्यकिंदानंकथंस्नानंविधिश्चकः ॥ पुरु
णा ॥ ४४ ॥ स्वशक्त्या ... मापते ॥ ५ ॥ वक्तव्यंकिंतथापूजाध्यानंमंत्रादिकंचयत् ॥ यत्रयत्क्रियतेकर्मतत्सर्वं
कीसहितायांतिममलो ... भगवानुवान ॥ साधुपृष्टंत्वयाब्रह्मन्सर्वलोकोपकारिणा ॥ यस्मिन्कृतेकृतंसर्वंइष्टापूर्तं
र्मुनिसत्तमैः ॥ ... वयज्ञेषुयत्पुण्यंसर्वतीर्थेषुयत्फलं ॥ तत्फलंसमवाप्नोतिमार्गशीर्षेकृतेनृप ॥८॥ तुलापुरुषदा
णाम् ॥ नक ... तेनरः ॥ तत्फलंप्राप्यतेपुत्रमाहात्म्यश्रवणात्किल ॥९॥ यज्ञाध्ययनदानाद्यैःसर्वतीर्थावगाहनैः॥
वसेप्राप्ते ... योगेननाहंवश्योभवेन्नृणाम् ॥१०॥ स्नानेनदानेनचपूजनेनहोमेनमौनेनजपादिभिश्च ॥ वश्योयथा
खोनर ... चमासितथानचान्येषुहिगुह्यमुक्तम् ॥ ११ ॥ अन्यैर्धर्मादिभिःकृत्वागोपितंमार्गशीर्षकम् ॥ मत्प्राप्तेः
... गंमत्वादेवैःस्वर्गनिवासिभिः ॥ १२ ॥ येकेचित्पुण्यकर्माणोममभक्तिपरायणाः ॥ तैरवश्यंचकर्तव्यंमार्गशी
... मदाश्रयम् ॥ १३ ॥ मार्गशीर्षंनकुर्वंतियेनराभारतेजिरे ॥ पापरूपाश्चतेज्ञेयाःकलिकालेविमोहिताः ॥ १४ ॥
अष्टस्वपिचमासेषुयत्फलंलभतेनरः ॥ यत्फलंलभतेवत्समाघेमकरगेरवौ ॥१५॥ माघाच्छतगुणंपुण्यंवैशाखे
... सिलभ्यते ॥ तस्मात्सहस्रगुणितंतुलासंस्थेदिवाकरे ॥ १६ ॥ तस्मात्कोटिगुणंपुण्यंवृश्चिकस्थेदिवाकरे ॥
... र्षोधिकस्तः ... तथा ॥ या ॥१७॥ उषस्यत्थाययोमर्त्यःस्नानंविधिवदाचरेत् ॥ तुष्टोहंतस्य ... ९
... पातपुंड्राणि

 ...हरतामशृणुपुत्रकथांतरम् ॥ नंदगोपोमहात्मावैख्यातोयोभू
॥१८ १९ ॥ तस्यैवगोकुलेरम्यंगोपकन्याःसहस्रशः ॥ तासांचित्तंचमद्रूपेलग्नमासीत्पुरानघ ॥ २० ॥ तासांबु
द्धिर्मयादत्तामार्गशीर्षावगाहने ॥ ततस्ताभिःकृतंस्नानंप्रातःकालेयथाविधि ॥ २१ ॥ पूजाकृताहाविष्यंचमुक्तं
ताभिःकृतानतिः ॥ एवंकृतेनविधिनाप्रसन्नोहंततोनघ ॥ २२ ॥ वरोदत्तोमयात्मावैतासांतुष्टेनवैकिल ॥ त
श्याविह्वरैश्चकर्तव्यंमार्गशीर्षेयथाविधि ॥ २३ ॥ इतिश्रीस्कंदपुराणेमार्गशीर्षमाहात्म्येप्रथमोध्यायः ॥ ॥छ॥
माहात्म्येद्वा ॥ ॥ त्वयोक्तंविधिसंयुक्तंकर्तव्यंमार्गशीर्षकम् ॥ कोविधिस्तस्यदेवेशसर्वमेवब्रूहिकेशव ॥ १ ॥ श्री
बुधैः ॥ मार्गश. ॥ रात्रावंतेसमुत्थायउपस्पृश्ययथाविधि ॥ नमस्कृत्यगुरुंस्वस्यसंस्मरन्मांततोनघ ॥ २ ॥ सह
नंधीमानग्निकार्यंयत्कीर्तयेद्वाग्यतःशुचिः ॥ बहिर्ग्रामात्समुत्सृज्यमलमूत्रंयथाविधि ॥ ३ ॥ आदायतुलसीमूलमृ
तुपादयोः ॥ ३ ॥ कृत्लमंत्रेणाभिमंत्र्यगायत्र्यावामहामते ॥ ४ ॥ मंत्रेणैवानुलिप्तांगःस्नायादप्स्वघमर्षणम् ॥ अ
कोशानिसर्वाणिध्यात्वामांर्व्विधीयते ॥५॥ तीर्थंप्रकल्पयेद्विद्वान्मंत्रेणानेनमंत्रवित् ॥ ओंनमोनारायणायेतिमूलमंत्रमु
जंसर्वलक्षणलक्षितम् ॥ ६ स्तुविधिनाआचांतःप्रयतःशुचिः ॥ चतुर्हस्तसमायुक्तंचतुरस्रंसमंततः ॥ ७ ॥ प्र
एवमुच्चारयेद्वाचंतस्मिन्कालेचतुःक्षणः ॥ विष्णुपादप्रसूतासिवैष्णवीविष्णुदैवते ॥ ८ ॥ त्राहिनस्त्वेनसस्तस्मादा
शरणंमेभवाच्युत ॥ ८ ॥ एवमुक्त्वार्धकोटीश्चतीर्थानांवायुरब्रवीत् ॥ ९ ॥ दिविभुव्यंतरिक्षेचतानितेसंतिजाह्न ॥ १ ॥
तःप्रभातेविमलांनदींगत्वासमुद्रगाम् तिच ॥ १० ॥ दक्षपुत्रीचविहगाविश्वकायाशिवामृता ॥ विद्याधरासुप्र
...रजाह्नवीचैवशांताशांतिप्रदायिनी ॥ एतानिपुण्यनामानिस्नानकालेप्र

लेदं [illegible]त्रिपथगामिनी ॥ सप्तवाराभिजप्तेनकरसंपुटयोजितम् ॥ १३ ॥ मू
कीर्तयेत् ॥ १२ ॥ तदासन्निहितातत्रगंगा [illegible] स्नानंकुर्यान्मृदातद्वदामंत्र्यानुविधानतः ॥ १४ ॥ अश्वक्रांतेरथक्रांते
ञ्छिकल्पांजलिंभूयस्त्रिचतुःपंचसप्तवा ॥ [illegible]पंयन्मयादुष्कृतंकृतम् ॥ १५ ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥
विष्णुक्रांतेवसुंधरे ॥ मृत्तिकेहरमेपा[illegible]व्रते ॥ १६ ॥ एवंस्नात्वाततःपश्चादाचम्यचावधानतः ॥ उत्थायवाससीशुद्धे
नमस्तेसर्वलोकानांप्रभावारणिम[illegible] आचम्यतर्पयेद्देवान्पितॄंश्चैवऋषींस्तथा॥ निष्पीड्यवस्त्रमाचम्यधौतवस्त्रादिवेष्टितः
शुक्लेद्वेपरिधापयेत् ॥ १७ [illegible]रम्यामादायद्विजसत्तमः ॥ मंत्रेणैवाभिमंत्र्याथललाटादिपुवैष्णवः ॥ १९ ॥ धारये
॥ १८ ॥ विमल [illegible]यमतंद्रितः ॥ ब्रह्मन्द्वादशपुंड्राणिब्राह्मणःसततंधरेत् ॥ २० ॥ चत्वारिभूभृतांपुत्रपुंड्राणि
दुर्ध्वपुंड्राणियथा [illegible]एकंपुंड्रंचनारीणांशूद्राणांचविधीयते ॥ २१ ॥ ललाटेउदरेचैववक्षसिकंठकूबरे ॥ कुक्षौबा
द्वेविंशांस्मृते ॥ [illegible]र्श्वेपृष्ठेतथैवच ॥ २२ ॥ त्रिकेद्वादशकंप्रोक्तंब्राह्मणायसदानघ ॥ ललाटेहृदिबाह्वोश्चक्षत्रीपुंड्रा
ह्वोःकंधरेचप[illegible] ॥ २३ ॥ ललाटेहृदिवैश्यश्चभालेवैशूद्रयोषितौ ॥ ललाटेकेशवंध्यायेन्नारायणमथोदरे ॥ २४ ॥
णिधारयेन्[illegible]लेमाधवंचगोविंदंकंठकूबरे ॥ विष्णुंचदक्षिणेकुक्षौबाह्वोश्चमधुसूदनम् ॥२५॥ त्रिविक्रमंकंधरेतुवामनंवा
वक्षस्[illegible]पार्श्वके ॥ श्रीधरंदक्षिणेपार्श्वेहृषीकेशंतुकंधरे ॥ २६ ॥ पृष्ठेतुपद्मनाभंचत्रिकेदामोदरंन्यसेत् ॥ तत्प्रक्षालन
म[illegible]तोयेनवासुदेवंचमूर्धनि ॥ २७ ॥ एवंकार्यंब्राह्मणस्यक्षत्रियस्योपधारय ॥ ललाटेकेशवंध्यायेद्धृदयेमाधवंतथा
॥ २८ ॥ बाह्वोश्चउभयोर्वक्षस्मरेद्वैमधुसूदनम् ॥ क्षत्रियस्यविधिःप्रोक्तोवैश्यकृत्यंनिशामय ॥ २९ ॥ ल
लाटेकेशवंध्यायेद्धृदयेमाधवंतथा ॥ योषिच्छूद्रौस्मरेद्देवंकेशवंभालदेशके ॥ ३० ॥ अनेनविधिनाकुर्यात्पुंड्राणि

ममतुष्टये ॥ श्यामंशांतिकरंप्रोक्तंरक्तंवश्यकरंतथा ॥ ३१ ॥ श्रीकरंपीतमित्याहुःश्वेतंमोक्षकरंस्मृतम् ॥ एकां माहा०
तिनोमहाभागाःसर्वभूतहितेरताः ॥ ३२ ॥ सांतरालंप्रकुर्वीतिपुंड्रंहरिपदाकृति ॥ मध्येछिद्रेणसंयुक्तंताद्विद्धिहरि
॥ ३ ॥ मंदिरं ॥ ३३ ॥ ऊर्ध्वपुंड्रमृजुंसौम्यंसुपार्श्वंसुमनोहरम् ॥ निरंतरालंयःकुर्यादूर्ध्वपुंड्रंद्विजाधमः ॥ ३४ ॥ स
देहेतत्रस्थितंलक्ष्म्यासहमांचव्यपोहति ॥ अच्छिद्रमूर्ध्वपुंड्रंतुयेकुर्वीतिद्विजाधमाः ॥ ३५ ॥ तेषांललाटेसततंशुनः
पापकेसंशयः ॥ तस्माच्छिद्रान्वितंपुण्यंमहाछिद्रंशुभान्वितम् ॥ धारयेद्ब्राह्मणोनित्यंहरिसालोक्यसिद्धये ॥
खेप्रत्यहंकृ ॥ इतिश्रीस्कंदपुराणेमार्गशीर्षमाहात्म्येद्वितीयोध्यायः ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ पुंड्रंकतिवि
तं ॥ ३३ ममकेशव ॥ पुंड्राणांश्रवणेतविकौतुकंममजायते ॥ १ ॥ श्रीभगवानुवाच ॥ शृणुवत्सप्रवक्ष्यामि
च्चानंदपुरेप्रोक्तंचम्तम् ॥ तुलसीमृत्स्नयासार्धंश्रीगोपीचंदनेनच ॥ २ ॥ हरिचन्दनेनचततःकार्यंतत्रविचक्षणैः ॥
दनमृत्स्नया ॥ प्रयो निबोधगदतोमम ॥ ३ ॥ श्रीकृष्णतुलसीमूलमृदमादायभक्तिमान् ॥ धारयेदूर्ध्वपुंड्राणिह
प्रसन्नोहंपापंतस्यदहा योमृत्तिकांद्वारवतीसमुद्भवांकरेसमादायललाटपट्टके ॥ करोतिनित्यंपुरुषोर्ध्वपुंड्रकांकि
॥ ३८ ॥ नारायणायुधैर्नित्य ॥ ५ ॥ क्रियाविहीनंयदिमंत्रहीनंश्रद्धाविहीनंयदिकालवर्जितम् ॥ कृतेललाटेय
कितोभक्त्याश्राद्धंयःकुरुतेसुतः तदाव्ययम् ॥ ६ ॥ गोपीचंदनसंभवंसुरुचिरंपुंड्रंललाटेद्विजोनित्यंधारयतेय
तोभृशम् ॥ तथादह्यतिपापानिसद पुण्यंकुरुजांगलेरविग्रहेमाघ्यांप्रयागेतथातत्प्राप्नोतिततोधिकंममगृहेसंतिष्ठतेदे ॥ २ ॥
युधादिकैर्युक्तास्वर्णरूप्यमयापिवा ॥ चंदनंभक्त्याललाटेमनुजोविभर्तिचेत् ॥ तस्मिन्गृहेहंनिवसामिसर्वदा
न्यथाममवल्लभः ॥ ४३ ॥ यस्यनारायणी धारयेत्द्वारवतीसमुद्भवांसदापवित्रांकलिकल्मषापहाम् ॥ नित्यंलला

॥ ४४ ॥ द्वादशाक्षरमंत्रस्तुनियुक्तानिकलेदं ९ ॥ यस्यांतकालेसुतगोपिचंदनंबाव्होर्ललाटेह्रदिमस्तकेच ॥
नुर्विप्रोभुंक्तेवैयस्यवेश्मनि ॥ तदन्नंस्व ्यदिब्रह्महास्यात् ॥ १० ॥ ग्रहानपीडंतिनरक्षसांगणायक्षाःपिशाचोर
रोतियः ॥ द्वादशाब्दार्जितंपुण्यंवा ्यचंदनंसंतिष्ठतेतस्यममप्रसादात् ॥ ११ ॥ उर्ध्वपुंड्रंऋजुंसौम्यंललाटेय
गेयागतिःप्रोक्तासागतिस्तस्यमान ्मापूज्यएवनसंशयः ॥ १२ ॥ अस्नातोयःक्रियांकुर्यादशुचिःपापसंयुतः ॥ गो
धावासवादयः ॥४९॥ यःकू ्क्षणात् ॥ १३ ॥ शुचिरेवभवेन्नित्यमूर्ध्वपुंड्रांकितोनरः ॥ यत्प्रियार्थंशुभार्थंवार
कृत्वाकाष्ठमयंबिंबममाचि ् मत्पूजाहोमकालेचसायंप्रातःसमाहितः ॥ सद्भक्तोधारयेन्नित्यंऊर्ध्वपुंड्रंभयापहम्
स्यधातुमयींकरे ॥ शं ्रोमत्यौंम्रियतेयत्रकुत्रचित् ॥ श्वपाकोपिविमानस्थोममलोकेमहीयते ॥ १६ ॥ ऊर्ध्वपुं
णेनवलिनाध्रुवेण ्यान्नमश्नुते ॥ तदाविंशत्कुलंतस्यनरकादुद्धराम्यहम् ॥ १७ ॥ वीक्ष्यादर्शेजलेवापियोवि
पुत्रक ॥ ५४ ्तः॥ऊर्ध्वपुंड्रंमहाभागप्रयातिपरमांगतिम् ॥१८॥ अनामिकाशांतिकरीमध्यमायुःकरीभवेत् ॥ अं
चक्रादिप ्दःप्रोक्तस्तर्जनीमोक्षदायिनी ॥ १९ ॥ गोपीचंदनखंडंतुयोददातीहवैष्णवे ॥ कुलमष्टोत्तरंतेनभव
क्षणः ॥ ्तंशतं ॥२०॥ यज्ञोदानंतपोहोमःस्वाध्यायःपितृतर्पणम् ॥ व्यर्थंभवतितत्सर्वंऊर्ध्वपुंड्रंविनाकृतम् ॥२१॥
शरवच्छरीरंमनुष्याणांऊर्ध्वपुंड्रंविनाकृतं ॥ तद्द्रष्टव्यंनैवभवताश्मशानसदृशंभवेत् ॥२२ ॥ ऊर्ध्वपुंड्रंतुयःकुर्याद्देवं
॥ भक्त्याचतुर्मुख ॥ सर्वपापविनिर्मुक्तस्त्रिदशैरपिवंद्यते ॥ २३ ॥ ऊर्ध्वपुंड्रंतुयःकृत्वामत्स्यकूर्मादिधारणं ॥ कु
र्याद्विष्णुप्रसादार्थंमहाविष्णोरतिप्रियं ॥ २४ ॥ यःपुनःकलिकालेतुमत्पुरीसंभवांमृदं ॥ मत्स्यकूर्मांकितांचन्हं
गृहीत्वाकुरुतेनरः ॥ २५ ॥ देहेतस्यप्रविष्टंमांजानीहित्रिदशोत्तम ॥ तस्यमेनांतरंकिंचित्कर्तव्यंश्रेयइच्छता

० ॥ २६ ॥ ममावतारचिन्हानिदृश्यंतेतस्याविग्रहे ॥ मर्त्योमर्त्योनविज्ञेयःसनूनंमामकीतनुः ॥ २७ ॥ पापंसुकृ
तरूपंतुजायतेतस्यदेहिनः ॥ ममायुधानिदृश्यंतेलिखितानिकलौयुगे ॥ २८ ॥ उभाभ्यांममचिन्हानियोंकितो
 मत्स्यमुद्रया ॥ कूर्मयापिस्वकंतेजोनिक्षिप्तंतस्यविग्रहे ॥ २९ ॥ शंखंचपद्मंचगदांरथांगंमत्स्यंचकूर्मंराचितंस्व
देहे ॥ करोतिनित्यंसुकृतस्यवृद्धिंपापक्षयंजन्मशतार्जितंच ॥ ३० ॥ नारायणायुधैर्नित्यंचिन्हितंयस्यविग्रहं ॥
पापकोटिप्रयुक्तस्यतस्यकिंकुरुतेयमः ॥ ३१ ॥ शंखोद्धारेचयत्प्रोक्तंवसतांवर्षकोटिभिः ॥ तत्फलंलिखितेशं
खेप्रत्यहंदक्षिणेभुजे ॥ ३२ ॥ यत्फलंपुष्करेनित्यंपुंडरीकाक्षदर्शनात् ॥ शंखेबाहौपरिकृतेतत्फलंकोटिसंमि
तं ॥ ३३ ॥ वामेभुजेगदायस्यलिखितादृश्यतेकलौ ॥ गदाधरोगयापुण्यंप्रत्यहंतस्ययच्छति ॥ ३४ ॥ य
च्चानंदपुरेप्रोक्तंचक्रस्वामिसमीपतः ॥ गदाधोलिखितेचक्रेतत्फलंकृष्णदर्शनं ॥३५॥ ममायुधांकितंदेहंगोपीचं
दनमृत्स्नया ॥ प्रयागादिषुतीर्थेषुसगत्वाकिंकरिष्यति ॥३६॥ यदायदाप्रपश्येहंदेहंशंखादिचिन्हितं ॥ तदातदा
प्रसन्नोहंपापंतस्यदहाम्यहं ॥ ३७ ॥ वर्ततेयस्यदेहेतुअहोरात्रंदिनेदिने ॥ शंखंचक्रगदापद्मंलिखितंसमदंशकः
॥ ३८ ॥ नारायणायुधैर्नित्यांकृत्वात्मानंकलौयुगे ॥ पुण्यकर्माणिकुरुतेमेरुतुल्यान्यसंशयः ॥ ३९ ॥ शंखायुधां
कितोभक्त्याश्राद्धंयःकुरुतेसुतः ॥ विधिहीनंतुसंपूर्णंपितृणांदत्तमक्षयम् ॥ ४० ॥ यथाग्निर्दहतेकक्षंवायुनाप्रेरि
तोभृशम् ॥ तथादह्यतिपापानिसदृष्ट्वाआयुधानिवै ॥ ४१ ॥ ममनामांकितामुद्राअष्टाक्षरसमन्विता ॥ शंखा 
युधादिकैर्युक्तास्वर्णरूप्यमयापिवा ॥ ४२ ॥ धत्तेभागवतोयस्तुकलिकालेविशेषतः ॥ प्रह्लादस्यसमोज्ञेयोना
न्यथाममवल्लभः ॥ ४३ ॥ यस्यनारायणीमुद्रादेहंशंखादिचिह्नितम् ॥ धात्रीफलकृतामालातुलसीकाष्ठसंभवा

॥ ४४ ॥ द्वादशाक्षरमंत्रस्तुनियुक्तानिकलेवरे ॥ आयुधानिचविप्रस्यमत्समःसचवैष्णवः ॥ ४५ ॥ शंखांकितत
नुर्विप्रोभुंक्तेवैयस्यवेश्मनि ॥ तदन्नंस्वयं ... धमश्नामिपितृभिःसहपुत्रक ॥ ४६ ॥ कृष्णायुधांकितंदृष्ट्वासन्मानंनक
रोतियः ॥ द्वादशाब्दार्जितंपुण्यंवाष्कलेयायगच्छति ॥४७॥ कृष्णायुधांकितोयस्तुश्मशानेम्रियतेयदि ॥ प्रया
गेयागतिःप्रोक्तासागतिस्तस्यमान ... द ॥ ४८ ॥ ममायुधैःकलौनित्यंमंडितोयस्यविग्रहः ॥ तस्याश्रयंप्रकुर्वंतिविबु
धावासवादयः ॥४९॥ यःकुर्वीतिचमेपूजांममशास्त्रांकितोनरः ॥ अपराधसहस्राणिनित्यंतस्यहराम्यहम् ॥ ५० ॥
कृत्वाकाष्ठमयंबिंबममानिन्यं ... हैस्तुचिह्नितम् ॥ योवैअंकगतंदेहंतत्समोनास्तिवैष्णवः ॥ ५१ ॥ अष्टाक्षरांकितामुद्राय
स्यधातुमयीकरे ॥ शंखपद्मादिभिर्युक्तापूज्यतेसौसुरासुरैः ॥ ५२ ॥ धृतानारायणीमुद्राप्रह्लादेनपुराकरे ॥ विभीष
णेनवलिनाध्रुवेण ... चशुकेनच ॥ ५३ ॥ मांधात्राह्यंबरीषेणमार्कंडेयमुखैर्द्विजैः ॥ शंखादिचिन्हितैःशस्त्रैर्देहंकृत्वाच
पुत्रक ॥ ५४ ॥ एवमादायमांप्राप्तंसमीहितफलंमहत् ॥ गोपीचंदनमृत्स्नायालिखितायस्यविग्रहे ॥ ५५ ॥ शंख
चक्रादिपद्मांतादेहेतस्यवसाम्यहम् ॥ सौवर्णराजतंताम्रंकांस्यमायसमेवच ॥५६॥ तप्तंकृत्वातुमेधावीधारयेतविच
क्षणः ॥ द्वादशारंचषट्कोणंवलित्रयविभूषितम् ॥ ५७ ॥ एवंसुदर्शनंचक्रंधारयेतविचक्षणः ॥ उपवीतादिवद्धार्या
शंखचक्रगदादयः ॥ ५८ ॥ ब्राह्मणेवैविशेषेणवैष्णवश्चविशेषतः ॥ उपवीतंशिखायद्वच्चक्रलांछनसंयुतम्
॥ ५९ ॥ चक्रलांछनहीनस्यविप्रस्यविफलंभवेत् ॥ ममचक्रांकितोदेहःपवित्रइतिवैश्रुतिः ॥ ६० ॥ चक्रांकिता
यदातव्यंहव्यंकव्यंविचक्षणैः ॥ ममचक्रांककवचंअभेद्यंसर्वदानवैः ॥ ६१ ॥ अजेयःसर्वभूतानांशत्रूणांरक्षसाम
पि ॥ममचक्रांककवचंशरीरेयस्यतिष्ठति ॥ ६२ ॥ नाशुभंविद्यतेतस्यगृहेपुत्रादिकस्यहि ॥ दक्षिणेचभुजेविप्रोवि

भृयाद्वैसुदर्शनम् ॥ ६३ ॥ सव्येतुशंखंबिभृयादितिवेदविदोविदुः ॥ तत्तन्मंत्रेणमंत्रज्ञःप्रतिष्ठाप्यपृथक्पृथक् 
॥ ६४ ॥ ललाटेचगदाधार्यामूर्ध्निचापंशरस्तथा ॥ पद्मकंचैवहृन्मध्येशंखचक्रेभुजद्वये ॥ ६५ ॥ तस्मात्सर्वप्रय
 त्नेनचक्रादीन्धारयेत्सदा ॥ धारणानंतरंतत्रएवंब्रूयाद्द्विजोत्तमः ॥ ६६ ॥ पुत्रमित्रकलत्रादिर्यःकश्चिन्मत्परिग्र
हः ॥ सहदेहेनसर्वोसौविष्णुप्रीत्यैमयार्पितः ॥ ६७ ॥ पश्चात्तद्धर्ममास्थायतिष्ठेदाजीवनंमम ॥ भक्त्याचाव्यभि
चारिण्यासर्वदाप्तमनोरथः ॥ ६८ ॥ तप्तचक्रांकितंदृष्ट्वायेनिंदंतिनराधमाः ॥ अवलोक्यमुखंतेषामादित्यमव
लोकयेत् ॥ ६९ ॥ ॥ इतिश्रीस्कंदपुराणेमार्गशीर्षमाहात्म्येतृतीयोध्यायः ॥ ॥ ७ ॥ ॥ ७ ॥
ब्रह्मोवाच ॥ तवचक्रांकितंकृत्वाह्यात्मानंचाप्यदीक्षितः ॥ पद्माक्षतुलसीमालाफलंमेब्रूहिकेशव ॥ १ ॥
श्रीकेशवउवाच ॥ तुलसीकाष्ठजांमालांकंठस्थांवहतेतुयः ॥ अप्यशौचोप्यनाचारोमामेवैतिनसंशयः ॥ २ ॥
धात्रीफलकृतामालातुलसीकाष्ठसंभवा ॥ दृश्यतेयस्यदेहेतुसवैभागवतोनरः ॥ तुलसीदलजांमालांकंठस्थांवह
तेतुयः ॥ ममोत्तीर्णांविशेषेणसनमस्योदिवौकसां ॥ ४ ॥ तुलसीदलजांमालांममोत्तीर्णांवहेत्तुयः ॥ पत्रेपत्रेश्व
मेधानांदशानांवहतेफलं॥५॥ तुलसीकाष्ठसंभूतांयोमालांवहतेनरः ॥ फलंयच्छाम्यहंवत्सप्रत्यहंद्वारकोद्भवं ॥६॥
निवेद्यभक्त्याह्यमलांतुलसीकाष्ठसंभवाम् ॥ वहतेयोनरोभक्त्यातस्यवैनास्तिपातकं ॥ ७ ॥ मुदाप्रीतमनास्तस्य
वत्सप्राणाद्वरोहिसः ॥ तुलसीकाष्ठसंभूतांयांमालांवहतेनरः ॥ ८ ॥ प्रायश्चित्तंनतस्यास्तिनाशौचंतस्यविग्र 
हे ॥ तुलसीकाष्ठसंभूतांशिरसोवाह्यभूषणं ॥ ९ ॥ बाहौकरेचमर्त्यस्यदेहेयस्यसमेतनुः ॥ तुलसीकाष्ठमा
लाभिर्भूषितोपुण्यमाचरेत् ॥ १० ॥ पितॄणांदेवतानांचपुण्यंकोटिगुणंभवेत् ॥ तुलसीकाष्ठमालांतुप्रेतराजस्य

दूतकाः ॥ ११ ॥ दृष्ट्वा नश्यंतिदूरेणवातोद्धूतंयथादलं ॥ यद्गृहेतुलसीकाष्ठंपत्रंशुष्कमथार्द्रकं ॥ १२ ॥ भ
वतेतद्गृहेनैवपापंसंक्रमतेकलौ ॥ तुलसीकाष्ठमालाभिर्भूषितोभ्रमतेभुवि ॥ १३ ॥ दुःस्वप्नंदुर्निमित्तंचनभयंशात्रवं
क्वचित् ॥ धारयंतिनयेमालांहैतुकाःपापबुद्धयः ॥१४॥ नरकान्ननिवर्ततेदग्धाःकोपाग्निनामम ॥ तस्माद्धार्याप्र
यत्नेनमालातुलसिसंभवा ॥ १५ ॥ पद्माक्षनिर्मिताभक्त्याफलैर्धार्याःसुपुण्यदा ॥ तदूर्ध्वपुंड्रशंखाद्यैर्युक्तस्तु
लसिभूषणैः ॥ १६ ॥ संध्योपास्यादिकंकुर्यात्कुशपाणिर्हिमांस्मरन् ॥ कृतसंध्यादिकोभक्त्याततःसंपूजयेत्तुमाम्
॥ १७ ॥ गुरुश्चेत्तत्रवर्तेतआदौगत्वानमेद्गुरुं ॥ किंचिदुपायनंदत्त्वादंडवत्प्रणमेन्मुदा ॥ १८ ॥ आचम्यै
काग्रमनसापूजामंडपमाविशेत् ॥ उपविश्यासनेरम्येकृष्णाजिनकुशोत्तरे ॥ १९ ॥ सम्यक्पद्मासनासीनोभू
तशुद्धिंसमाचरेत् ॥ प्राणायामत्रयंकृत्वामंत्रेणाचलितेंद्रियः ॥ २० ॥ उदङ्मुखंततःकृत्वाहृत्पंकजमनुत्तमं ॥
विकाशंतस्यकुर्वीतविज्ञानरविणाहृदि ॥ २१ ॥ तत्कर्णिकायांवन्ह्यर्कशशिबिंबान्यनुक्रमात् ॥ तत्रमंत्रमयींत
स्मिन्चिंतयेद्वैष्णवोनरः ॥ २२ ॥ नानारत्नमयंपीठंतेषामुपरिचिंतयेत् ॥ तस्मिन्मृदुश्लक्ष्णतरेबालार्कसदृश
द्युति ॥ २३ ॥ अष्टैश्वर्यदलंपद्मंमंत्राक्षरमचिंतयेत् ॥ तस्मिन्देव्यासमासीनंकोटिशीतांशुसन्निभं ॥ २४ ॥
चतुर्भुजंसुंदरांगंशंखचक्रगदाधरं ॥ पद्मपत्रविशालाक्षंसर्वलक्षणलक्षितं ॥ २५ ॥ श्रीवत्सकौस्तुभोरस्कंपी
तवस्त्रधरंचमां ॥ विचित्राभरणैर्युक्तंदिव्यमंडलमंडितं ॥ २६ ॥ दिव्यचंदनलिप्तांगंदिव्यपुष्पोपशोभितं ॥ तु
लसीकोमलदलैर्वनमालाविभूषितं ॥ २७ ॥ बालार्ककोटिसदृशंकांत्यादेव्याश्रियासह ॥ सर्वलक्षणलक्षिण्या
समाश्लिष्टतनुंशिवम् ॥ २८ ॥ एवंध्यात्वाजपेन्मंत्रंसमाहितमनाःशुचिः ॥ सहस्रंशतवारंवायथाशक्तिजपे

॰॰ न्मनुं ॥ २९ ॥ मनसैवार्चनंकृत्वाततोविधिवदाचरेत् ॥ संप्रदायानुरोधेनशंखंसंस्थाप्यममाग्रतः ॥ ३० ॥ दूर्वा माहा॰
कुरैश्चपुष्पैश्चगंधोदेनचपूरितं ॥ दक्षिणेगंधपुष्पाणिपात्रंसंस्थाप्यदेशिकः ॥ ३१ ॥ वामभागेन्यसेत्कुंभंवस्त्र
॥ ५ ॥ पूतंसुवासितं ॥ पुरतोममघंटांचदिक्षुदीपान्नियोजयेत् ॥ ३२ ॥ अन्यत्सर्वंसाधनंचयथास्थानेषुविन्यसेत् ॥
पाद्यार्घ्याचमनीयार्थंमधुपर्कस्यकारणात् ॥ ३३ ॥ विन्यसेत्पुरतोमह्यंचतुःपात्राण्यनुक्रमात् ॥ सिद्धार्थाक्षत
पुष्पादिकुशाग्रंतिलचंदनं ॥ ३४ ॥ फलंयवांश्चतुर्वक्त्रअर्घ्यपात्रेविनिक्षिपेत् ॥ दूर्वाविष्णुपदीश्यामापद्मंचैवच
तुर्थकं ॥ ३५ ॥ पाद्यपात्रेन्यसेत्पुत्रदेशिकोममतुष्टये ॥ कंकोलंचलवंगंचफलंमालतिसंभवं ॥ ३६ ॥ कु
र्याद्वैश्रद्धयापुत्रपात्रेत्वाचमनीयके ॥ दिव्यंपयोदधिमधुघृतखंडसमन्वितं ॥ ३७ ॥ मधुपर्कस्यपात्रेवैदद्याद्वैश्र
द्धयार्चकः ॥ उक्तानांद्रव्यजातीनांअलाभेपत्रपुष्पकैः ॥ ३८ ॥ तत्तद्भावनयाकुर्यात्सर्वदाविधिकोविदः ॥ क
रन्यासंततःकुर्यादंगन्यासंतथैवच ॥ ३९ ॥ पंचांगंवाषडंगंवाविन्यसेत्संप्रदायतः ॥ ममापिस्मरणंकुर्यादा
त्मानंमत्समंस्मरेत् ॥ ४० ॥ पूजारंभेचतुर्वक्त्रममशांतिंपठेत्ततः ॥अथसंपूजयेच्छंखंपांचजन्यंममप्रियं ॥४१॥
यस्यसंपूजनाद्वत्सआनंदःपरोमम ॥ शंखस्यपूजनेवत्समंत्रानेतानुदीरयेत् ॥ ४२ ॥ त्वंपुरासागरोत्पन्नोवि
ष्णुनाविधृतःकरे ॥ नमितःसर्वदेवैश्चपांचजन्यनमोस्तुते ॥४३ ॥ गर्भादेवारिनारीणांविशीर्यंतेसहस्रधा ॥ तव
नादेनपातालेपांचजन्यनमोस्तुते ॥ ४४ ॥ तवनादेनजीमूताविद्रवंतिसुरासुराः ॥ शशांकायुतदीप्ताभपांचज ॥ ५ ॥
न्यनमोस्तुते ॥ ४५ ॥ दर्शनेनहिशंखस्यकिंपुनःस्पर्शनेनतु ॥ विलयंयांतिपापानिहिमवद्भास्करोदये ॥ ४६ ॥
नत्वाशंखंकरेधृत्वामंत्रेणानेनवैष्णवः ॥ यःस्नापयतिगोविंदंतस्यपुण्यमनंतकम् ॥ ४७ ॥ सुवासितेनतैलेनकु

र्यादभ्यंजनंततः ॥ कस्तूर्याचंदनेनैवकुर्याद्दुद्वर्त्तनादिकम् ॥ ४८ ॥ सुगंधवासितैस्तोयैःस्नाप्यमंत्रयुतैःशुभैः ॥ अर्घ्यंदद्यात्ततोवत्सपाद्यमाचमनीयकम् ॥ ४९ ॥ मधुपर्कंततोदद्यादथसर्वोपधारकम् ॥ वस्त्रैराभरणैर्दिव्यैरलं कृत्यययथाविधि ॥ ५० ॥ पुष्पैःसंपूजयेत्पीठंतत्रदेवंनिधायच ॥ वस्त्रालंकारगंधादीनर्पयेच्छूद्धयामम ॥ ५१ ॥ नैवेद्यंविविधंदद्यात्पायसापूपमिश्रितं ॥ सकर्पूरंसतांबूलंभक्त्याचैवनिवेदयेत् ॥ ५२ ॥ सुरभीणिचपुष्पाणिभ क्त्यासम्यक्समर्पयेत् ॥ धूपंदशांगमष्टांगंदीपंचसुमनोहरम् ॥ ५३ ॥ परिक्रम्यप्रणम्याथस्तुत्वास्तुतिभिरुत्त मैः॥शाययित्वासुपर्यंकेमंगलार्थंनिवेदयेत् ॥ ५४ ॥ ॥ इतिश्रीस्कंदपुराणेमार्गशीर्षमाहात्म्येचतुर्थोध्यायः ॥ ब्रह्मोवाच ॥ पंचामृतस्यस्नपनाद्यत्फलंलभतेहरेः ॥ शंखोदकेनयत्किंचित्तन्मेब्रूह्यजिताच्युत ॥ १ ॥ श्रीभ गवानुवाच ॥ क्षीरस्नानंप्रकुर्वंतियेनरामममूर्धनि ॥ शताश्वमेधजंपुण्यंविंदुनाबिंदुनास्मृतं ॥२॥ क्षीराद्दशगुणंद ध्नाघृतेनचदशोत्तरं ॥ गंधपुष्पोदकंपात्रंसर्वोत्कृष्टंप्रशस्यते ॥ ३ ॥ द्वादश्यांपंचदश्यांवागव्येनपयसामम ॥ स्नापनंदेवशार्दूलमहापातकनाशनम् ॥ ४ ॥ दध्यादीनांविकाराणांक्षीरतःसंभवोयथा ॥ तथैवाशेषकामानां क्षीरस्नपनतोमम ॥ ५ ॥ क्षीरस्नानेनसौभाग्यंदध्नामिष्टान्नभोजनं ॥ घृतेनस्नापयेच्चेन्मांनरोममपुरंव्रजेत् ॥ ६ ॥ स्नानंशर्करयायस्तुकारयेन्मार्गशीर्षके ॥ सराजाजायतेलोकेपुनःस्वर्गादिहागतः ॥ ७ ॥ कारयेद्योमधुस्नानंभ क्त्यावैमार्गशीर्षके ॥ गजाश्वरथसंकीर्णंसराज्यंलभतेभुवि ॥ ८ ॥ कारयेन्मार्गशीर्षेवैयःकुर्यात्क्षीरस्नापनं ॥ स्वर्गलोकान्सजयतिचंद्ररुद्रेंद्रमारुतान् ॥ ९ ॥ क्षीरस्नानंपरंश्रेष्ठंमार्गशीर्षेचपुत्रक ॥ क्षीरस्नापकमाहात्म्यंव चेस्कंपुष्टिदंनृणां ॥ १० ॥ दौर्भाग्यंविलयंयातिक्षीरस्नानाच्चमांसुत ॥ स्नापयेन्मार्गशीर्षेयोमांवैपंचामृतेनवै

॥ ११ ॥ नसशोच्योभवेत्स्यातोबंधुनाक्षीरमानद ॥ कपिलाक्षीरमादाययःस्नापयतिमांसुत ॥ १२ ॥ कपिला 
॥ ५ शतदानस्यफलमाप्नोतिमानवः ॥ शंखेतीर्थोदकंकृत्वायःस्नापयतिदेशिकः ॥ १३ ॥ बिंदुनापिसहोमासेस्व
॥ ६ ॥ कुलंतारयेद्द्विसः ॥ कपिलाक्षीरमादायशंखेकृत्वातुमानद ॥१४॥ यःस्नापयातिमांभक्त्यासर्वार्थःसुफलोभवेत् ॥
क्षीरमादायशंखेनक्षीरस्नानाधिकारकः ॥ १५ ॥ मार्गशीर्षेस्नापयेन्मांअश्वमेधफलंलभेत् ॥ शंखेकृत्वातुपानी
यंसाक्षतंकुसुमान्वितं ॥ १६ ॥ यःस्नापयेत्सहोमासेसर्वतीर्थफलंलभेत् ॥ शंखोदकेनयःस्नानंकारयेन्मार्गशी
र्षके ॥ १७ ॥ भक्त्याभागवतश्रेष्ठममलोकेमहीयते ॥ शंखषोडशकेनाथयःस्नापयतिमांसुत ॥ १८ ॥ सपा
पमुक्तःसुचिरंस्वर्गलोकेमहीयते ॥ चतुर्विंशतिसंख्यातैःशंखैर्यःस्नापयेच्चमाम् ॥ १९ ॥ इंद्रलोकेचिरंस्थित्वास
राजाभुविजायते ॥ शंखेनाष्टोत्तरशतंस्नापयेन्मार्गशीर्षके ॥ २० ॥ शंखेशंखेसुवर्णस्यफलमाप्नोतिमानवः ॥
मार्गशीर्षेभक्तिमान्यःशंखैःपंचशतैर्हिमां ॥ २१ ॥ स्नापयेत्पितरस्तस्यस्वर्गेतावत्प्रतिष्ठिताः ॥ अष्टोत्तरसह
स्रंतुशंखस्नानंसमाचरेत् ॥ २२ ॥ सगणोमुक्तिमाप्नोतियावदाभूतसंप्लवं ॥ नित्यंसंस्नापयेद्योमांशंखेनसुरसत्त
म ॥ २३ ॥ गंगास्नानफलंप्राप्यनित्यंनंदतिदेववत् ॥ शंखतोयंसमादाययःस्नापयतिमांसुत ॥ २४ ॥ नमो
नारायणेत्युक्त्वामुच्यतेसर्वकिल्बिषैः ॥ कृत्वापादोदकंशंखेवैष्णवानांमहात्मनां ॥ २५ ॥ योददातितिलोन्मिश्रं
चांद्रायणफलंलभेत् ॥ नदीतडागजंचैववापीकूपादिकंचयत् ॥ २६ ॥ गांगेयंजायतेसर्वंजलंशंखेकृतंसुत ॥ ॥ ६ ॥
गृहीत्वाममपादांबुशंखेकृत्वातुवैष्णवः ॥ २७॥ योवहेच्छिरसानित्यंसमुनिस्तपतांवरः ॥ त्रैलोक्येयानितीर्थानिम
मचैवाज्ञयासुत ॥ २८॥ शंखेतानिवसंतिहितस्माच्छंखोवरःस्मृतः ॥ त्वंपुरासागरोत्पन्नइत्याद्यामनवःस्मृताः ॥

॥ २९ ॥ सांबुशंखंकरेधृत्वामंत्रैरेभिस्तुवैष्णवः ॥ यःस्नापयेन्मार्गशीर्षेतस्यतुष्टोभवाम्यहं ॥ ३० ॥ विलेपने
नसंपूर्णंशंखंकृत्वाचमांभजेत् ॥ तदामेपरमाप्रीतिर्भवेद्वैशतवार्षिकी ॥ ३२ ॥ शंखेकृत्वातुपानीयंसपुष्पंसज
लाक्षतं ॥ अर्घ्यंददातियोमांवैतस्यपुण्यमनंतकं ॥ ३३ ॥ अर्घ्यंदत्वास्वयंशंखेयःकरोतिप्रदक्षिणां ॥
प्रदक्षिणीकृतातेनसप्तद्वीपावसुंधरा ॥ ३४ ॥ भ्रामयित्वाचमेमूर्ध्निमंदिरंशंखवारिणा ॥ प्रोक्षयेद्वैष्णवोयस्तुनाशु
भंतद्गृहेभवेत् ॥ ३५ ॥ सदाहोनक्षमस्तस्यनारकंनभयंक्वचित् ॥ यस्यपादोदकंशंखेकृत्वामूर्धानमाश्रयेत् ॥
॥ ३६ ॥ ग्रहारक्षांसिकूष्मांडाःपिशाचोरगराक्षसाः ॥ दृष्ट्वाशंखोदकंमूर्ध्निविद्रवंतिदिशोदश ॥ ३७ ॥ वादि
त्रनिनदैरुच्चैर्गीतवादित्रनिस्वनैः ॥ यःस्नापयतिमांभक्त्याजीवन्मुक्तोभवेद्द्विजः ॥ ३८ ॥ ॥ इतिश्रीस्कंदपु
राणेमार्गशीर्षमाहात्म्येपंचमोध्यायः ॥ ॥ ५ ॥ ॥ ब्रह्मोवाच ॥ घंटानादस्यमाहात्म्यंचंदनस्यतथाच्युत ॥
यत्फलंलभतेस्वामिन्तत्सर्वंब्रूहितत्त्वतः ॥ १ ॥ श्रीभगवानुवाच ॥ स्नानार्चनक्रियाकालेघंटानादंकरोतियः ॥
पुरतोममदेवेशतस्यपुण्यफलंशृणु ॥ २ ॥ वर्षकोटिसहस्राणिवर्षकोटिशतानिच ॥ वसतेमामकेलोकेअप्सरो
गणसेवितः ॥ ३ ॥ सर्ववाद्यमयीघंटासर्वदाममवल्लभा ॥ वादनाल्लभतेपुण्यंयज्ञकोटिशतोद्भवं ॥ घंटानादःस
दाकार्यःपूजाकालेविशेषतः ॥ सर्ववाद्यमयीघंटासर्वदेवमयीततः ॥ ५ ॥ तस्मात्सर्वप्रयत्ननेघंटानादंतुकारयेत् ॥
मन्वंतरसहस्राणिमन्वंतरशतानिच ॥ ६ ॥ प्रीतोभवामिसततंघंटानादेनपुत्रक ॥ भेरीशंखनिनादेनघंटानादा
न्वितेनच ॥ ७ ॥ मृदंगशंखेनयुतंप्रणवेनसमन्वितं ॥ अर्चनंममदेवेशअर्चनंमोक्षदंनृणां ॥ ८ ॥ यत्रतिष्ठति
पुरतोघंटानादांकितामम ॥ अर्चितोवैष्णवोयत्रतत्रमांविद्धिपुत्रक ॥ ९ ॥ वैनतेयांकिताघंटासुदर्शनयुताथवा ॥

ममाग्रेस्थापयेद्यस्तुतस्यदेहेवसाम्यहं ॥ १० ॥ मदीयार्चनवेलायांघंटानादंशृणोतियः ॥ नश्यंतितस्यपापानिश तजन्मार्जितान्यपि ॥ ११ ॥ स्वकरेणप्रकुर्वीतिघंटानादंकरोतियः ॥ ममैवार्चनवेलायांफलंकोटिगुणंभवेत् ॥ ॥ १२ ॥ योमामर्चयतिदेवेशंगरुडोपरिसंस्थितं ॥ शंखपद्मगदायुक्तंसचक्रंचश्रियान्वितं ॥ १३ ॥ किंक रिष्यतितैस्तीर्थैःदेवतानांचदर्शनैः ॥ किंयज्ञैःकिंव्रतैर्वापिकिंदानैःकिमुपोषणैः ॥ १४ ॥ मूर्तिर्नारायणी यत्रमामकीगरुडोपरि ॥ स्थापयित्वाकलौयांतिकल्पकोटिपदंमम ॥ १५ ॥ ममाग्रेस्थापयेद्यस्तुप्रासादेथ गृहेपिवा ॥ तीर्थकोटिसहस्राणितत्रतिष्ठंतिदेवताः ॥ १६ ॥ यस्तुपूजयतेधन्योगरुडोपरिसंस्थितं ॥ ए कादश्यांतथारात्रौवासनासंयुतंमम ॥ १७ ॥ कृत्वागीतंचनृत्यंचतारयेन्नरकात्पितॄन् ॥ पुनःस्तुकथयि ष्यामिशृणुघंटामहंसुत ॥१८॥ ममनामांकिताघंटापुरतोयाचतिष्ठति॥अर्चितावैष्णवीयत्रतत्रमांविद्धिपुत्रक॥१९॥ ममनामांकिताघंटासुदर्शनयुताअपि ॥ ममाग्रेस्थापयेद्यस्तुगेहेतस्यवसाम्यहम् ॥ २० ॥ यस्तुवाद यतेघंटांवैनतेयेनचिन्हितग्राम् ॥ धूपेनीराजनेस्नानेपूजाकालेविलेपने ॥ २१ ॥ ममाग्रेप्रत्यहंवत्सप्रत्ये कंलभतेफलम् ॥ मखायुतंशोयुतंचचांद्रायणशतोद्भवम् ॥ २२ ॥ विधिवद्याकृतापूजासफलाजायतेनृणाम् ॥ घंटानादेनतुष्टोहंप्रयच्छामिस्ववैकुंपदम् ॥ २३ ॥ नागारिचिह्निताघंटारथांगेनसमन्विता ॥ वादनात्कुरुतेनाशं जन्ममृत्युभयस्यच ॥ २४ ॥ गरुडेनांकितांघंटांदृष्ट्वाहंप्रत्यहंमुदा ॥ प्रीतिंकरोमिदेवेशलक्ष्मींप्राप्ययथाधनः ॥ २५ ॥ घंटानादस्यशिखरेचक्रंसंस्थापयेत्तुयः ॥ तत्प्रियंवैनतेयंवास्थापितंभुवनत्रयम् ॥ २६ ॥ घंटानादं सचक्रंचअंतकालेशृणोतियः ॥ पापकोटियुतस्यापिनायांतियमकिंकराः ॥ २७ ॥ सर्वेदोषाःप्रणश्यंतिघंटाना

देकृतेमम ॥ देवतानांमनुष्याणांपितृणामुत्सवोभवेत् ॥ २८ ॥ अभावेवैनतेयस्यचक्रस्यापिनसंशयः ॥ घंटा
नादेनभक्तानांप्रसादंप्रकरोम्यहम् ॥ २९ ॥ गृहेयस्मिन्भवेन्नित्यंघंटानागारिसंयुता ॥ सर्पाणांनभयंतत्रनाग्नि
विद्युत्समुद्भवम् ॥ ३० ॥ यस्यघंटागृहेनास्तिशंखोनपुरतोमम ॥ कथंभागवतोनामदीयतेतस्यदेहिनः ॥३१॥
चंदनस्यप्रवक्ष्यामिमाहात्म्यंशृणुपुत्रक ॥ यस्मिन्कृतेभवेत्प्रीतिर्ममात्यंतंनसंशयः ॥ ३२ ॥ सचंदनंसकुंकुमं
कर्पूरागरुमिश्रितम् ॥ मृगनाभिसमायुक्तंजातीफलसुमिश्रितम् ॥ ३३ ॥ तुलसीचंदनोपेतंममात्यंतंसुखावह
म् ॥ योददातिचमेनित्यंतुलसीकाष्ठचंदनम् ॥ ३४ ॥ युगानिवसतेस्वर्गेह्यनंतानिनरोत्तमः ॥ महाविष्णोःक
लौभक्त्यादत्वातुलसिचंदनम् ॥ ३५ ॥ योर्चयेन्मालतीपुष्पैर्नभूयस्तनपोभवेत् ॥ तुलसीकाष्ठसंभूतंचंदनंय
च्छतोमम ॥ ३६ ॥ दहामिपातकंसर्वंपूर्वजन्मशतोद्भवम् ॥ सर्वेषामेवदेवानांतुलसीकाष्ठचंदनम् ॥ ३७ ॥
पितृणांचविशेषेणसदाभीष्टंयथामम ॥ श्रीखंडंचंदनंतावत्श्रेष्ठंकृष्णागरुंतथा ॥ ३८ ॥ यावन्नदृश्यतेपुण्यंतुल
सीकाष्ठचंदनम् ॥ तावत्कस्तूरिकामोदःकर्पूरस्यसुगंधता ॥ ३९ ॥ यावन्नदीयतेमह्यंतुलसीकाष्ठचंदनम् ॥
कलौयच्छंतियेमह्यंतुलसीकाष्ठचंदनम् ॥४० ॥ मार्गशीर्षेशुभेमासेतेकृतार्थानसंशयः ॥ योहिभागवतोभूत्वाक
लौतुलसिचंदनम् ॥ ४१ ॥ नार्पयेद्योसहोमासेनसभागवतोनरः ॥ कुंकुमागरुश्रीखंडकर्दमैर्ममविग्रहम्
॥ ४२ ॥ कर्पूरागरुमिश्रेणचंदनेनानुलेपयेत् ॥ मृगदर्पविशेषेणअभीष्टंचसदामम ॥ ४३ ॥ विलेपयंतियेमां
वैशंखेकलौतुचंदनम् ॥ मार्गशीर्षेतदाप्रीतिंकरोमिशतवार्षिकीम् ॥४४॥ तुलसीदलेनवामह्यंलग्नेनैवानुसेवते ॥
मार्गशीर्षेसदाभक्त्यासलभेद्वांछितंफलम् ॥ ४५ ॥ ॥ इतिश्रीस्कंदपुराणेमार्गशीर्षमाहात्म्येषष्ठोध्यायः ॥

ब्रह्मोवाच ॥ माहात्म्यंवदमेदेवपुष्पजातिसमुद्भवम् ॥ येनपुष्पेणतेप्रीतिर्भवेत्सम्यक्नसंशयः ॥ १ ॥ श्रीभग
वानुवाच ॥ शृणुपुत्रप्रवक्ष्यामिमाहात्म्यंपुष्पसंभवं ॥ येनपुष्पेणमेप्रीतिर्भवेत्सम्यक्नसंशयः ॥ २ ॥ मल्लिका
मालतीचैवयूथिकाजातिमुक्तका ॥ पाटलीकरवीराश्वजयंतीचजयातथा ॥ ३ ॥ कुब्जकस्तरुणश्चैवकार्णिका
रःकुरंटकः ॥ चंपकश्चूतकःकुंदोबाणोकब्बरमल्लिका ॥ ४ ॥ अशोकस्तिलकश्चंपस्तथैवाटकरूषकः ॥ अमी
पुष्पप्रकारास्तुशस्तामेपूजनेसुत ॥ ५ ॥ केतकीपत्रपुष्पंचतथाह्याम्रमयस्यच ॥ तुलसीपत्रपुष्पंचसद्यःप्रीतिक
रंमम ॥ ६ ॥ पद्मान्यंबुसमुत्थानिरक्तनीलोत्पलेतथा ॥ सीतोत्पलंसहोमासेममात्यंतंहिवल्लभम् ॥ ७ ॥ तान्येव
चप्रशस्तानिकुशादीनिमतानिमे ॥ सुरभीणितथान्यानिवर्जयित्वातुकेतकीम् ॥ ८ ॥ बिल्वपत्रंशमीपत्रंपत्रंभृंगरज
स्यच ॥ तमालमालतीपत्रंशस्तंमेपूजनेसुत ॥ ९ ॥ पुष्पैररण्यसंभूतैःपत्रैर्वागिरिसंभवैः ॥ अपर्युषितनिश्छिद्रैः
प्रोक्षितैर्जंतुवार्जितैः ॥ १० ॥ अथारामोद्भवैर्वापिपुष्पैःसंपूजयेच्चमाम् ॥ पुष्पजातीविशेषेणभवेत्पुण्यंविशेषतः
॥ ११ ॥ तपःशीलगुणोपेतपात्रेवेदस्यपारगे ॥ दशदत्त्वासुवर्णानियत्फलंलभतेनरः ॥ १२ ॥ तत्फलंलभते
मर्त्योसहेकुसुमदानतः ॥ द्रोणपुष्पैस्तथैकस्मिन्मह्यंचविनिवेदिते ॥ १३ ॥ दशदत्त्वासुवर्णानितत्फलंसम
वाप्नुयात् ॥ एवंपुष्पविशेषेणफलंतदाधिकंसुत ॥ १४ ॥ पुष्पपुष्पांतरेभेदोयथासीत्तंनिबोधमे ॥ द्रोणपुष्पसह
स्रेभ्यःखादिरंतुविशेषतः ॥ १५ ॥ खादिरपुष्पसहस्रेभ्योबुकपुष्पंविशिष्यते ॥ बुकपुष्पसहस्रेभ्यःशमीपुष्पं
विशिष्यते ॥ १६ ॥ शमीपुष्पसहस्रेभ्योबिल्वपुष्पंविशिष्यते ॥ बिल्वपुष्पसहस्रेभ्योनद्यावर्तीविशिष्यते ॥ १७ ॥
नद्यावर्तसहस्राद्धिकरवीरंविशिष्यते ॥ करवीरसहस्रस्यकुसुमंश्वेतमुत्तमम् ॥ १८ ॥ करवीरश्वेतपुष्पात्पालाशंपुष्पमु

त्तमम् ॥ पालाशपुष्पसहस्राद्धिकुशपुष्पंविशिष्यते॥१९॥कुशपुष्पसहस्राद्धिवनमालाप्रशस्यते ॥वनमालासहस्रा
द्धिचंपकंतुविशिष्यते ॥ चंपकस्यपुष्पशतादशोकंपुष्पमुत्तमम् ॥२०॥ अशोकपुष्पसाहस्रात्सेवंतीपुष्पमुत्तमम् ॥
सेवंत्यास्तुसहस्राद्धिकुब्जकंपुष्पमुत्तमम् ॥२१॥ कुब्जकपुष्पसहस्राद्धिमालतीपुष्पमुत्तमम् ॥ मालतीपुष्पसह
स्राद्धित्रिसंध्यापुष्पमुत्तमम् ॥ २२ ॥ त्रिसंध्यास्तुसहस्राद्धित्रिसंध्याश्वेतमुत्तमम् ॥ त्रिसंध्याश्वेतसाहस्रात्कुंद
पुष्पंविशिष्यते ॥ २३ ॥ कुंदपुष्पसहस्राद्धिजातीपुष्पंविशिष्यते ॥ सर्वासांपुष्पजातीनांजातीपुष्पंसहोत्तमम्
॥ २४ ॥ जातीपुष्पसहस्रेणयच्छेन्मालांसुशोभनाम् ॥ मद्धर्मोविधिवद्दद्यात्तस्यपुण्यफलंशृणु ॥ २५ ॥ क
ल्पकोटिसहस्राणिकल्पकोटिशतानिच ॥ मत्पुरेवसतेश्रीमान्ममतुल्यपराक्रमः ॥ २६ ॥ येषांसंतिचपुष्पाणि
प्रशस्तानिममार्चने ॥ तेषांशस्तानिपत्राणितदलाभेफलानिच ॥ २७ ॥ एतैःपत्रैश्चपुष्पैश्चफलैश्चापितथाहि
माम् ॥ अर्चयन्दशसहस्रस्यप्रत्येकंफलमाप्नुयात् ॥ २८ ॥ एतैश्चपुष्पजातीभिःसहोमासेर्चयंतिमाम् ॥ भ
क्तिंददामितेषांवैतुष्टःसन्नात्रसंशयः ॥ २९ ॥ धनंपुत्रांस्तथादारान्यत्किंचिद्वांछतेहिसः ॥ तत्तद्ददामिविप्रेंद्रपु
ष्पैरेभिःप्रतोषितः ॥ ३० ॥ ॥ इतिश्रीस्कंदपुराणेमार्गशीर्षमाहात्म्येसप्तमोध्यायः ॥ ७ ॥ ॥ ब्रह्मोवाच ॥
श्रीमत्तुलस्यामाहात्म्यंयथावद्वर्णयप्रभो ॥ यस्याःसन्निधिमात्रेणप्रीतिर्भवतितेधिका ॥ १ ॥ श्रीभगवानुवाच ॥
मणिकांचनपुष्पाणितथामुक्तामयानिच ॥ तुलसीपत्रदानस्यकलांनार्हंतिषोडशीम् ॥ २ ॥ तुलसीमंजरीभिश्च
यःकुर्यान्ममपूजनम् ॥ नसगर्भगृहान्यातिमुक्तिभागीभवेन्नरः ॥ ३ ॥ आरोप्यतुलसींवत्सपूजयेत्तद्दलैश्चमा
म् ॥ वसंतिमोदमानास्तेश्वेतद्वीपेत्रमेगृहे ॥ ४ ॥ श्रीमत्तुलस्यार्चयतेसकृद्धिमांपत्रैःसुगंधैर्निमलैरखंडितैः ॥ य

मा० त्स्यपापंपटसंस्थितंतदानिरीक्षयित्वापरिमार्जयेद्यमः ॥५॥ मत्पूजनार्थंतुलसीनयेषांसंपद्यतेद्वादशिपुण्यवासरे ॥ माहा०
॥ धिग्यौवनंजीवितमर्थसंततिस्तेषांसुखंनेहचदृश्यतेपरे ॥ ६ ॥ लिंगमभ्यर्चितंदृष्ट्वासहोमासेचमामकम् ॥ तुल
॥ ९ ॥ सीपत्रनिकरैर्मुच्यतेब्रह्महत्यया ॥ ७ ॥ नित्यमभ्यर्चयेद्योवैतुलस्यामांरमेश्वरं ॥ महापापानिनश्यंतिकिंपुनश्चोप
पातकम् ॥ ८ ॥ वर्ज्यंपर्युषितंपुष्पंवर्ज्यंपर्युषितंजलम् ॥ नवर्ज्यंतुलसीपत्रंनवर्ज्यंजान्हवीजलम् ॥९॥ तावद्गर्ज
तिपुष्पाणिमालत्यादीनिभोसुत ॥ यावन्नप्राप्यतेपुष्पंतुलसीममवल्लभा ॥ १० ॥ सकृदभ्यर्चयेद्योमांबिल्वपत्रे
णमानवः ॥ मुक्तिभागीनिरातंकीममपारिषदोभवेत् ॥ ११ ॥ बिल्वपत्राच्छमीपत्राज्जातीपत्रात्सरोरुहात् ॥ व
ल्लभंतुलसीपत्रंकौस्तुभादधिकंमम ॥ १२ ॥ अभिन्नपत्रराहिताह्याद्यामंजरिसंयुता ॥ क्षीरोदार्णवसंभूताशस्ताती
वसदामम ॥ १३ ॥ अकृष्णाचाथकृष्णानुतुलसीममवल्लभा ॥ सिताचाप्यसितावापिद्वादशीवल्लभायथा ॥
॥ १४ ॥ गृहीत्वातुलसीपत्रंभक्त्यायोमांसमर्चयेत् ॥ अर्चितंतेनसकलंसदेवासुरमानुषम् ॥ १५ ॥ तावद्गर्ज
तिरत्नानिकौस्तुभादीन्यसंशयः ॥ यावन्नप्राप्यतेकृष्णातुलसीकृष्णमंजरी ॥ १६ ॥ कृष्णंकृष्णतुलस्याहियोभ
क्त्यापूजयेन्नरः ॥ सयातिभुवनंशुभ्रंयत्रविष्णुःश्रियासह ॥१७॥ ममार्चनार्थंभिक्षूणांयच्छंतितुलसीदलम् ॥ अ
न्येषामपिभक्तानांयांतितेपदमव्ययम् ॥ १८ ॥ तुलसीकृष्णगौरायाभक्त्यायोमांसमर्चयेत् ॥ नरोयातितनुंत्यक्त्वा
वैष्णवींशाश्वतींगतिम् ॥ १९ ॥ ब्रह्मोवाच ॥ धूपदानस्यमाहात्म्यंदीपस्यापिचकेशव ॥ यत्फलंलभतेतत्रतन्मे ॥ ९ ॥
ब्रूहियथार्थतः ॥ २० ॥ श्रीभगवानुवाच ॥ शृणुपुत्रप्रवक्ष्यामिधूपदानेनयत्फलम् ॥ दीपस्यापिचमाहात्म्यंमम
प्रीतिकरंपरम् ॥२१॥ अगरुंचसकर्पूरंदिव्यचंदनसौरभम् ॥ दत्त्वामांवैसहोमासेकुलानांतारयेच्छतम् ॥ २२ ॥

कृष्णागरुसमूहेनधूपेनचममालयम् ॥ धूपयेद्वैष्णवोयस्तुसमुक्तोनरकार्णवात् ॥२३॥ माहिषंगुग्गुलंयस्तुआज्ययु
क्तंसशर्करम् ॥ धूपंददातियोवैमांतस्यचेष्टंददाम्यहम् ॥ २४ ॥ गुग्गुलंद्दत्यशेषाणिअरिष्टाणिचधूपितम् ॥
योमांनानाविधंचैवअगरुंसंप्रयच्छति ॥ २५ ॥ गेहेगेहेपुनात्येवधूपस्त्वगरुसंभवः ॥ नाशयेद्यक्षरक्षांसिधूपःसर्वर
सोद्भवः ॥ २६ ॥ धूपंदशांगंयदिचेत्करोतिवैमासेसहेमेअतिवल्लभेच ॥ ददातिकामानतिदुर्लभांश्चबलंपुष्टिं
पुत्रदारांश्चभक्तिम् ॥२७॥ मुस्ताधूपेमानुषाणांप्रियत्वंमांगल्यंवैवश्यकरंगुडस्य ॥ कुर्यात्सहोमासिममाग्रतोयोवि
हायपापानिसमांसमाप्नुयात् ॥२८॥ नभयंविद्यतेतस्यदिव्यभौमांतरिक्षजम् ॥ ममधूपविशेषेणयस्यांगपरिमार्जि
तम् ॥ २९ ॥ नापदोविपदस्तस्यभवंतिखलुदेहिनः ॥ धूपेकृतेसहोमासेममाग्रेश्रद्धयान्वितः ॥ ३० ॥ धूपः
सरूपतांधत्तेधूपः पावनमुत्तमम् ॥ वानस्पत्योरसोदिव्यःसुरभिःपावनःशुचिः ॥ ३१ ॥ अतःपरंप्रवक्ष्यामिदीपमा
हात्म्यमुत्तमम् ॥ यस्मिन्कृतेनरोयातिवैकुंठंनात्रसंशयः ॥ ३२ ॥ बहुवर्त्तिसमायुक्तंबहुरूपसमन्वितम् ॥ कुर्या
दारार्तिकंयोवैकल्पकोटिवसेद्दिवि ॥ ३३ ॥ नीरांजनंतुयोपश्यत्सहोमासेममाग्रतः ॥ सप्तजन्मभवेद्विप्रोह्यंतेच
परमंपदम् ॥ ३४ ॥ कर्पूरेणतुयःकुर्याद्भक्त्याचैवममाग्रतः ॥ आरार्तिकंद्विजश्रेष्ठप्रविशेन्मामनंतकम् ॥ ३५ ॥
मंत्रहीनंक्रियाहीनंयत्कृतंपूजनंमम ॥ सर्वंसंपूर्णतामेतिकृतेनीरांजनेसुत ॥ ३६ ॥ यःकरोतिसहोमासेकर्पूरेणाथ
दीपकम् ॥ अश्वमेधमवाप्नोतिकुलंचैवसमुद्धरेत् ॥ ३७ ॥ ममागारेद्विजानांचदीपंदद्याच्चतुष्पथे ॥ मेधावीज्ञा
नसंपन्नोचक्षुष्मान्जायतेनरः ॥ ३८ ॥ घृतेनवाथतैलेनदीपंयोज्वलतेनरः ॥ सहोमासेममाग्रेचतस्यपुण्यफलं
शृणु ॥ ३९ ॥ विहायसकलंपापंसहस्रादित्यसन्निभः ॥ ज्योतिष्मताविमानेनममलोकेमहीयते ॥ ४० ॥ त

गा० स्मात्सर्वप्रयत्नेनदीपंदद्याद्विचक्षणः ॥ तंनदत्त्वान्वहंसद्यःसपतेन्नरकेध्रुवम् ॥ ४१ ॥ दीपंयोवैहरेत्पापोलोभा माहा०
॥ द्वेषात्द्विजोत्तमः ॥ तद्दीपहरणात्सोवैमूकोंधोजायतेभुवि ॥ ४२ ॥ ॥ इतिश्रीस्कंदपुराणेमार्गशीर्षमाहात्म्ये
॥१०॥ अष्टमोध्यायः ॥ ॥छ॥ ॥ ब्रह्मोवाच ॥ नैवेद्यस्याविधिंदेवब्रूहिमेतत्त्वतःप्रभो ॥ अनेकविविधंचेष्टंव्यंजनादी
न्यशेषतः ॥ १ ॥ श्रीभगवानुवाच ॥ साधुपृष्टंत्वयावत्समप्रीतिकरंपरम् ॥ वक्ष्यामितेन्नपानादीन्व्यंजनादी
न्यथार्थतः ॥ २ ॥ आदौहिरण्मयंपात्रंतदभावेचराजतम् ॥ तदभावेपलाशंचविस्तीर्णंबहुसुंदरम् ॥ ३ ॥ क
चोलाःशतशःकार्याःपात्रेवैशतशोनघ ॥ तन्मध्येव्यंजनादेयानानाफलमयाःशुभाः ॥ ४ ॥ पायसंचंद्रसंकाशं
पात्रेशर्करयायुतम् ॥ भक्ष्यंकुमुदवर्णाभंमुद्गान्कांचनसन्निभान् ॥ ५ ॥ नानाव्यंजनसंरुद्धत्रिभिःपंक्तिभिरेवच ॥
यैःकृतानियथाकार्याःशतशोभोजनेमम ॥ ६ ॥ द्राक्षकामिश्रिकाचैवचूतकामर्दकाःशुभाः ॥ मारीचिपिप्पली
सार्धद्रकैलाचंद्रकसंयुता ॥ ७ ॥ कथिकावटकाःकार्याभोजनेभूरिशोमम ॥ प्रलेहनास्तथाकार्याकचोलशतसं
युताः ॥ ८ ॥ नानाकुसुमसंमोदयुक्तासहसिमेप्रियः ॥ मंडकावर्तुलारम्याःसमाःसर्वत्रबिंबवत् ॥ ९ ॥ सितयास
हितेनाथदुग्धेनक्वथितेनच ॥ मधुवर्णेनगव्येनयुक्तेतास्मिन्शुभानन ॥ १० ॥ कचोलेशुभ्रकेवत्सस्थितंकांचनस
प्रभम् ॥ घृतंसुवासितंप्रीत्याप्रदेयंभोजनेमम ॥ ११ ॥ ततोगोधूमपिष्टेनचंद्रकेणाहिसोज्ज्वलम् ॥ सैंबाल्हिकाः
पूरिकास्तुशतछिद्रास्तुवेष्टिताः ॥ १२ ॥ अपूपाश्चयथाक्षीरप्रकारांश्चप्रकारयेत् ॥ मणयःसूत्रसंघाश्चमालतीकुसुमा ॥१०॥
दयः ॥ १३ ॥ पर्पटावर्पटारम्यामाषाःकूष्मांडसंयुताः ॥ वटकान्विविधान्रम्यान्कुर्यान्मासेसहेमम ॥ १४ ॥
दुग्धेनाजीमरीचैश्चपूरिताद्रोणकेशुभाः ॥ युक्तेचलवणेनातिशुद्धतैलेनपूरिताः ॥ १५ ॥ कुंकुमाभाःस्नेहहीनाःस

क्षताइवदुर्जनाः ॥ दुग्धयुक्ताःसिताःकेचिच्चिचिणीचूतसंभवाः ॥१६॥ द्राक्षारसयुताःकेचित्तथान्येक्षुरसैर्युताः ॥ राजिकाजलमध्यस्थास्तथान्येसितयाप्रह ॥ १७ ॥ रसैश्चतुर्भिर्वाप्यन्येवटकानवधामताः ॥ वज्रप्रभानुकणिका चारुबीजसुखारिकैः ॥ १८ ॥ शकलैर्नारिकेलस्यलवंगशतसंयुताः ॥ घृतक्षीरसितास्वस्ताःकटाहेतुप्रलोडिताः ॥ १९ ॥ लब्धासितादिकृतेन्याःस्निग्धाश्चफेणिकाः ॥ पराकिकासुवैपक्वाःकृताश्चंद्रेणपोलिका ॥ २० ॥ मोदकास्तत्रवैकार्याचारुबीजभाःपुटे ॥ सितयासाहिताःकार्याअन्यदुग्धेननिर्मयेत् ॥ २१ ॥ नारिकेलफलैश्चा न्येवृक्षनिर्यासनिर्मिताः ॥ बादामैश्चशुभाश्चान्येतिलैश्चकणवरिकैः ॥२२ ॥ ईदृशान्मोदकांश्चान्यान्तुष्ट्यर्थेमम कारयेत् ॥ अर्शघ्नीमानिनीकंदंतथार्द्रकरमर्दकम् ॥ २३ ॥ नारंगंचिंचिणीकंदंकंकोलीफलमेवच ॥ दशारंत्रिपु रीजातंशुभंनिंबुफलंबिसम् ॥ २४॥ द्राक्षाफलंचूतफलंरम्यंकंटाकिनीफलम् ॥ धात्रीफलंमुक्तिभवंपल्लववंवाडवं तथा ॥ २५ ॥ रंभाफलंपिप्पलीश्चमरीचाश्चमनोहराः ॥ शुद्धसर्षपतैलेनलवणेनसुवेधितम् ॥ २६ ॥ तथारा जिकयाबद्धंत्रिभिर्वर्षैर्घटस्थितम् ॥ एवंविधानिचान्नानिव्यंजनानिचमानद ॥ २७ ॥ कर्तव्यानिसहोमासेमम प्रीतिकराणिवै ॥ एतादृशेभोजनेचेदसामर्थ्यंभवेद्यदि ॥२८॥ एवंकार्यंतदातेनसंक्षेपेणशृणुष्वमे ॥ लड्डूकमेकं घृतपूरमेकंफेनद्वयंकोकरसत्रयंच ॥ घृतप्लुतंमंडकषोडशानांवटाष्टदायीनरकंनपश्येत् ॥२९॥ अर्धाष्टकंपर्युषितं चदग्धःखंडस्यषोडशफलानिशशिप्रभस्य ॥ सर्पिष्पलंमधुपलंमरिचांद्विकर्षंशुंठ्याःपलार्धमथवार्धपलंचतुर्णां ॥ ॥ ३० ॥ श्लक्ष्णेपटेललनयामृदुपाणिघृष्टाकर्पूरधूलिधवलीकृतभांडसंस्था ॥ एताशुभारसवतीप्रकरोतियोवै कामानूददामिसकलान्मनुजस्यतस्य ॥३१ ॥ इतिश्रीस्कंदपुराणेमार्गशीर्षमाहात्म्येनवमोध्यायः ॥९॥ ॥छ॥

ब्रह्मोवाच ॥ नैवेद्यानंतरंतातकिंकर्तव्यंनृभिःप्रभो ॥ यत्कर्तव्यंसहोमासेतत्सर्वंब्रूहितत्त्वतः ॥ १ ॥ श्रीभगवानु
वाच ॥ अथभुक्तवतेदत्त्वाजलैःकर्पूरवासितैः ॥ आचमनंचतांबूलंचंदनंकरमर्दनम् ॥ २ ॥ पुष्पांजलिंततःकु
र्यात्भक्त्यादर्शंप्रदर्शयेत् ॥ नीराजनंपुनःकार्यंकर्पूरंविभवेसति ॥ ३ ॥ समर्प्यकुसुमादीनिभूषणानिविचक्षणः ॥
ततःपश्चान्महाभागप्रकल्प्यछत्रचामरे ॥४॥ प्रसादसुमुखंध्यात्वाश्यामसुंदरविग्रहे ॥जपेदष्टोत्तरशतंस्तुवीतस्तुति
भिःप्रभुम् ॥५ ॥ शंखरूपमयीमालाकांचनीचविशेषतः ॥ पद्माक्षैश्चैवशुशुभेद्रुमैर्माणिक्यमौक्तिकैः ॥ ६ ॥ रचि
ताद्राक्षिकैर्मालातथैवांगुलिपर्वभिः ॥ पुत्रजीवमयीमालाशस्तावैजपकर्मणि ॥७॥ नचक्रमन्नचहसन्नपार्श्वमवलो
कयन् ॥ नपदापदमाक्रम्यकरप्राप्तशिरस्तथा ॥८॥ नोत्तिष्ठंश्चमनुंविद्वान्नजपेद्व्यग्रमानसः ॥ जपकालेनभाषेत
व्रतहोमादिकादि[?]पु ॥ ९ ॥ गृहेत्वेकगुणंजाप्यंनद्यांतद्द्विगुणंस्मृतं ॥ गवांगोष्ठेदशगुणंअग्न्यादिषुशताधिकं ॥
॥ १० ॥ तीर्थादिषुसहस्रंस्यादनंतंममसन्निधौ ॥ एवंकृत्वासहोमासेयःकुर्याच्चप्रदक्षिणां ॥ ११ ॥ सप्तद्वीपव
तीपुण्यंलभतेसपदेपदे ॥ पठन्नामसहस्रंतुअथवानामकेवलं ॥ १२ ॥ एकप्रदक्षिणांभक्त्यादहेत्पापंतदाह्निकं ॥
प्रदक्षिणीकृतातेनसप्तद्वीपा[?]सुंधरा ॥ १३ ॥ दिनसप्तोद्भवंपापंममतिस्रःप्रदक्षिणाः ॥ तत्क्षणान्नाशयंत्येवपापं
दशदशाह्निकम् ॥ १४ ॥ कृ[?]ाप्रदक्षिणायेनएकविंशतिभक्तितः ॥ भ्रूणहत्यादिपापानिनाशमायांतितत्क्षणात् ॥
॥ १५ ॥ अष्टोत्तरशतंयेनकृतंभक्त्याप्रदक्षिणाः ॥ तेनेष्टंक्रतुभिःपुण्यैःसमाप्तवरदक्षिणैः ॥१६॥ प्रदक्षिणीकृताते
नतावद्वारंवसुंधरा ॥ मातुःप्रदक्षिणंतद्[?]द्भूतधात्रीप्रदक्षिणा ॥ १७ ॥ शालग्रामशिलायाश्चसममेतन्नसंशयः ॥
एकोदंडप्रणामश्चसहेसप्तप्रदक्षिणाः ॥ १[?]८ ॥ सममेतद्द्वयंनोवादंडपातोविशिष्यते ॥ प्रदक्षिणंदंडपातंयःक

रोतिसदामम ॥ १९ ॥ सहोमासेविशेषेण आकल्पंवसतेदिवि ॥ कल्पादनंतरंतातचक्रवर्तीप्रजायते ॥ २० ॥
चिरायुर्धनवान्भोगीदानवान्धनवत्सलः॥सहस्रनामपठनात्पापंनश्येत्त्रिधाकृतं॥२१॥ अथवाकिंवहूक्तेनशृणुगुह्यं
चमेसुत ॥ दामोदरेतिनाम्नावैमेऽस्तिप्रीतिर्ममातुला ॥ २२ ॥ गुणसंबोधकंनामकृतंमात्रायशोदया ॥ यदामद
धिभांडस्यस्फोटनंगोकुलेकृतं ॥ २३ ॥ तदायशोदयागाढंदाम्नाबद्धोउलूखले ॥ ततःप्रभृतिमेनामख्यातंदामो
दरेतिच ॥ २४ ॥ ॐ नमोनारायणेतिजपेद्यःसुसमाहितः ॥ सूर्योदयेशुचिर्भूत्वात्रिसहस्रंदिनेदिने ॥२५॥ सार्ध
लक्षत्रयंयावत्ततउद्यापयेद्बुधः ॥ तर्पणंहवनंचैवब्रह्मभोज्यंदशांशतः ॥ २६॥ एवंयःकुरुतेभक्त्यातस्ययच्छामिवां
छितं ॥ धनंधान्यंतथादारान्पुत्रांश्चान्यांश्चवांछितम् ॥ २७ ॥ त्रिःसत्येनमयाप्रोक्तंशुद्धसत्त्वमहामते ॥ मनुराज
मिमंपुत्रकस्यापिप्रकाशितं ॥ २८ ॥ दामोदरेतिचपठन्कुर्यात्तस्मात्प्रदक्षिणं ॥ दंडपातंतथापुत्रअष्टांगेनसम
न्वितं ॥ २९ ॥ पद्भ्यांकराभ्यांजानुभ्यांउरसाशिरसातथा ॥ मनसावचसादृष्ट्याप्रणामोष्टांगउच्यते ॥ ३० ॥
शिरोमत्पादयोःकृत्वाबाहुभ्यांचपरस्परम् ॥ प्रसन्नंपाहिमामीशभीतंमृत्युग्रहार्णवात् ॥३१॥ पश्चाच्छेषांमयादत्तां
शिरस्याधायसादरं ॥ एवंब्रूयात्ततोवत्समम पूजनपूर्तये ॥ ३२ ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंजनार्दन ॥ यत्पू
जितंमयादेवपरिपूर्णंतदस्तुमे ॥ ३३ ॥ मृदंगवाद्येनसमंप्रणवेनतथासुत ॥ एवंकार्यंसहोमासेनित्यंमोक्षप्रदंनृ
णां ॥ ३४ ॥ गीतवाद्यंचनृत्यंचतथापुस्तकवाचनं ॥ पूजाकालेचतुर्वक्त्रसर्वदाममचप्रियं ॥ ३५ ॥ गीत
वाद्याद्यभावेचममनामसहस्रकं ॥ स्तवराजंतथापुत्रगजेंद्रस्यचमोक्षणं ॥ ३६ ॥ अनुस्मृतिश्चगीतायास्तवनंपं
चधामतं ॥ पंचस्तवंमहाभागममप्रीतिकरंपरं ॥ ३७ ॥ पादोदकंपिबेद्योवैशालग्रामसमुद्भवं ॥ पंचगव्यंसह

स्वैस्तुप्राशनंकिंप्रयोजनम् ॥ ३८ ॥ शालग्रामशिलातोयंयःपिबेद्बिंदुनासमम् ॥ मातुस्तन्यंपुनर्नैवसपिबेन्मु
क्तिभाङ्नरः ॥३९॥ आशौचंनैवविद्येतसूतकेमृतकेपिवा ॥ येषांपादोदकंमूर्ध्निप्राशनंयेप्रकुर्वते ॥४०॥ अंतकाले
पियस्येदंदीयतेपादयोर्जलम् ॥ सोपितद्गतिमाप्नोतिसदाचारबहिष्कृतः ॥४१ ॥ सोपिपूतोभवत्याशुसद्यःपादांबु
सेवनात् ॥ चाद्रायणात्पादकृच्छ्रादधिकंपादयोर्जलं ॥४२॥अपेयंपिबतेयस्तुभुंक्तेयश्चाप्यभोजनं ॥ अगम्यागम
नंचैवपापाचारश्चयोनरः ॥ ४३ ॥ अगरुंकुंकुमंचापिकर्पूरंचानुलेपनं ॥ ममपदांबुसंस्पृष्टंतद्वैपावनपावनं ॥
॥ ४४ ॥ वस्त्रपूतंतुयत्तोयंभवेद्वैविप्रसत्तम ॥ तद्वैपापहरंज्ञेयंकिंपुनःपादयोर्जलं ॥४५॥ प्रियस्त्वंमेग्रजःपुत्रविशे
षेणचमत्प्रियः ॥ त्वदर्थंगदितंसर्वंरहस्यंयच्चमत्स्थितम् ॥ ४६ ॥ इतिश्रीस्कंदपुराणेमार्गशीर्षमाहात्म्येदशमो
ध्यायः ॥ १० ॥ ॥ ६७ ॥ ॥ ब्रह्मोवाच ॥ एकादश्याश्चमाहात्म्यंउत्पत्तिंचविधानकं ॥ सर्वंप्रब्रू
हिमेतातकृपयाभूतभावन ॥१॥ श्रीभगवानुवाच ॥ शृणुपुत्रप्रवक्ष्यामिकथांपापप्रणाशनीम् ॥ यांश्रुत्वाविलयंयाति
पापंब्रह्मवधादिकम् ॥२॥ कापिलेनगरेराजावीरबाहुरितिस्मृतः ॥ सत्यवादीजितक्रोधोधर्मज्ञोधर्मतत्परः ॥ ३ ॥
क्षमावान्सदयाशीलोरूपवान्बलवान्नरः ॥ भक्तोभगवतःपुंसांसदाममकथारुचिः ॥ ४ ॥ सदाममकथासक्तः
सदाजागरणप्रियः ॥ सदाविद्वान्क्षमाशीलोविक्रमीविजितेंद्रियः ॥ ५ ॥ विजयीरणशूरश्चऋद्ध्याचधनदोपमः ॥
पुत्रवान्पौत्रवांश्चैवस्वदारनिरतस्तेष्वर्शां ॥ ६ ॥ तस्यभार्याकांतिमतीरूपेणाप्रतिमापिसा ॥ पतिव्रतामहासाध्वीम
मभक्तिरतासदा ॥७॥ तयासहविशालाक्षोबुभुजेमेदिनींयुवा ॥ मुक्तिकामोमहाभावोनान्यंजानातिदैवतम् ॥८॥
एकस्मिन्दिवसेपुत्रभारद्वाजोमहामुनिः ॥ समागतोगृहेतस्यवीरबाहोर्महात्मनः ॥९॥ दृष्ट्वासमागतंदूराद्भारद्वाजं

महामुनिम्॥ स्वागतंकारयामासदत्त्वार्घ्यंपाद्यविधिवत्तदा ॥१०॥ आसनंकल्पयामासस्वयमेवमहीपतिः ॥प्रणम्यपरया भक्त्यातस्थौमुनिरिवाग्रतः ॥ ११ ॥ राजोवाच ॥ अद्यमेसफलंजन्मअद्यमेसफलंदिनम् ॥ अद्यमेसफलंराज्यंअ द्यमेसफलंगृहं ॥ १२ ॥ प्रसन्नोममविप्रर्षेपरमात्माजनार्दनः ॥ यत्त्वंसमागतोह्यद्यगृहेयोगिवरस्तथा ॥ १३ ॥ मुक्तोहंपापपंकौघाद्यस्त्वयाहंनिरीक्षितः ॥ राज्यंलक्ष्मीर्गजाह्यश्वामयातुभ्यंनिवेदिताः ॥ १४ ॥ वैष्णवोसिमु निश्रेष्ठनास्त्यदेयंमयानघ ॥ मेरुतुल्यंभवेत्सर्वंवैष्णवस्यकरोर्पितम् ॥ १५ ॥ आयातिहिगृहेयस्यवैष्णवो यद्विजोत्तमः ॥ तद्दिनंसफलंतस्यकथितंब्राह्मणैर्मम ॥ १६ ॥ विष्णुभक्ताश्चयेकेचित्सर्वेवर्णाद्विजात यः ॥ कथितंममसाग्रेणगौतमेनसुमंतुना ॥ १७ ॥ येनभक्ताहृषीकेशेपिशाचास्तेचमानवाः ॥ महापातकलि प्तास्तेयेभुंजन्तिहरेर्दिने ॥१८॥ शिवव्रतसहस्रैश्चसूर्यब्राह्मैश्चकोटिभिः ॥ यत्फलंकविभिःप्रोक्तंवासरैकेनतद्धरेः ॥ ॥ १९ ॥ गर्वमुद्धरतेतावत्तिथिर्ब्राह्मीचशांकरी ॥ यावन्नायातिविप्रेंद्रद्वादशीचक्रपाणिनः ॥ २० ॥ तावत्प्र भावस्ताराणांयावन्नोदयतेरविः ॥ तिथयस्तावद्विप्रेंद्रयावन्नायातिद्वादशी ॥ २१ ॥ नारदेनपुराप्रोक्तंवसिष्ठेनममा ग्रतः ॥ त्वंवेत्तासर्वधर्माणांवैष्णवानांमहामुने ॥ २२ ॥ भारद्वाजउवाच ॥ साधुसाधुमहाभागत्वंभक्तोसिचवै ष्णवः ॥ साचप्रजामहावन्यायांत्वंरक्षासिभूमिप ॥ २३ ॥ तस्मिन्राष्ट्रेनवस्तव्यंयत्रराजानवैष्णवः ॥ वरंवासो वनेतीर्थेनतुराष्ट्रेह्यवैष्णवे ॥२४॥ यत्रभागवतोराजासंप्रशास्तिचमेदिनीम् ॥ वैकुंठमितिमंतव्यंतद्राष्ट्रंपापवर्जित म् ॥ २५ ॥ चक्षुर्हीनंयथादेहंपतिहीनायथास्त्रियः ॥ द्वादशीदशमीयुक्तातथाराष्ट्रमवैष्णवम् ॥ २६ ॥ दान हीनोयथाराजाब्राह्मणोरसविक्रयी ॥ द्वादशीदशमीयुक्तातथाराष्ट्रमवैष्णवम् ॥ २७ ॥ दंतहीनोयथाहस्तीपक्ष

धा० हीनोयथाखगः ॥ द्वादशी० ॥ २८ ॥ प्रतिग्रहार्थंवैदातिद्रव्यार्थंसुकृतंयथा ॥ द्वादशी० ॥ २९ ॥ दर्भहीना माहा०
यथासंध्यायथाश्राद्धमदक्षिणम् ॥ द्वादशी० ॥ ३० ॥ सशिरंचयथाशूद्रंकपिलाक्षीरपायिनम् ॥ द्वादशी०
॥१३॥ ॥ ३१ ॥ ब्राह्मणीगामिनंशूद्रंहेमजंधर्मदूषकम् ॥ द्वादशी० ॥ ३२ ॥ हरिसूर्यादिदक्षाणांयथाछेद्यंनरोत्तमे ॥
द्वादशी० ॥ ३३ ॥ यथाहुतिर्मंत्रहीनामृतवत्सापयोयथा ॥ द्वादशी० ॥ ३४ ॥ सकेशाविधवायद्वत्तंस्नानवि
वर्जितम् ॥ द्वादशी० ॥ ३५ ॥ सजारोप्रोच्यतेसाद्भिर्योभक्तोमधुसूदने ॥ तद्राष्ट्रंवर्धतेनित्यंसुखीभवतिसप्रजा
॥ ३६ ॥ दृष्टिर्मेसफलाराजन्यत्त्वयाहंनिरीक्षितः ॥ अद्यमेसफलावाणीजल्पतेयात्वयासह ॥ ३७ ॥ दूरमेवहि
गंतव्यंश्रूयतेयत्रवैष्णवः ॥ दर्शनाल्लभतेपुण्यंतीर्थस्नानसमुद्भवम् ॥ ३८ ॥ सत्वंराजन्मयादृष्टोविष्णुभक्तिरतःशु
चिः ॥ स्वस्तितेस्तुगमिष्यामिसुखीभवनराधिप ॥ ३९ ॥ एतस्मिन्नंतरेराज्ञ्याकांतिमत्यानमस्कृतः ॥ भारद्वा
जोमुनिश्रेष्ठप्रवरःस[illegible]हियोगिनाम् ॥ ४० ॥ अवैधव्यंवरारोहेभक्ताभवस्वभर्तरि ॥ निश्चलाकेशवेभक्तिःसदाभवतु
तेशुभे ॥ ४१ ॥ एतस्मिन्नंतरेराजाभारद्वाजंमहामुनिम् ॥ उवाचप्रीणयन्वाक्यंमेघनादगभीरया ॥ ४२ ॥
राजोवाच ॥ विपुलामेक[illegible]लक्ष्मीःकिंकृतंपूर्वजन्मनि ॥ सर्वंब्रूहिमुनिश्रेष्ठकृपायदिममोपरि ॥ ४३ ॥ एतन्म
याकथंप्राप्तंराज्यंनिहतकंटकम् ॥ पुत्रोवैगुणवान्श्रेष्ठःप्रियाचसुमनोहरा ॥ ४४ ॥ मच्चितामद्गतप्राणाचिंतयंती
जनार्दनम् ॥ कोहंमुनेकथंचैष[illegible]कश्चधर्मोमयाकृतः ॥ ४५ ॥ किंचानयापिचार्वंग्याममपत्न्याकृतंमुने ॥ किंवा ॥ १३ ॥
पुण्येनमेलक्ष्मीर्मर्त्युलोकेसुदुर्लभा ॥ ४६ ॥ अशेषभूमिपालावैवशेवर्ततिपश्यमे ॥ विक्रमंचप्रतीघातंशरीरारो
ग्यतातथा ॥ ४७ ॥ ममापिविपुलंतेजो[illegible]कश्चित्सहसमुने ॥ इच्छाम्यद्यपरिज्ञातुंयथाचेयमनिंदिता ॥४८॥ मा

यापिसुकृतंविप्रकिंकृतंपूर्वजन्मनि ॥ इतिपृष्टोनरेंद्रेणपूर्वजन्मनिचेष्टितम् ॥ ४९ ॥ स्वपत्न्याश्चेष्टितंचैवसंप
दांचैवकारणम् ॥ योगोत्थंसुचिरंकालंयथाविंदतमानसे ॥५०॥ विज्ञातमेतन्नृपतेपूर्वजन्मनिचेष्टितम् ॥ तवप
त्न्याश्चराजेंद्रशृणुष्वकथयामिह ॥ ५१ ॥ भारद्वाजउवाच ॥ शृणुभूपालसकलंयस्येदंकर्मणःफलं ॥ त्वमा
सीच्छूद्रजातीयोजीवहिंसापरायणः ॥ ५२ ॥ नास्तिकोदुष्टचारित्रोपरदारप्रघर्षकः ॥ कृतघ्नोदुर्विनीतश्चसुष्ठ्वा
चारविवर्जितः ॥ ५३ ॥ याइयंभवतोभार्यापूर्वंपापायतेक्षणा ॥ कर्मणामनसावाचानान्यदस्तित्वयाविना ॥
॥ ५४ ॥ पतिव्रतामहाभागभजमानानिरंतरम् ॥ भावंनकुरुतेदुष्टंतवोपरितथासती ॥ ५५ ॥ सहायै
स्त्वंपरित्यक्तोबंधुभिःपापकर्मकृत् ॥ क्षयंजगामचार्थोयत्संचितस्तवपूर्वजैः ॥ ५६ ॥ नष्टेद्रव्येफलाकांक्षीत्वया
सीज्जगतां ते ॥ पूर्वकर्मविपाकेनकृषिस्तुविफलागता ॥५७॥ ततोवित्तेपरिक्षीणेपरित्यक्तःस्वबांधवैः ॥ क्षम
माणेपिसाध्वीयंनत्वांत्यजतिभामिनी ॥ ५८ ॥ त्वंभग्नःसर्वकामेभ्योगतवान्निर्जनंवनम् ॥ हत्वाजीवाननेकांश्चत्वं
चकारात्मपोषणं ॥ ५९ ॥ एवंप्रवर्ततस्तत्रसहपत्न्यातदानृप ॥ गतानिबहुवर्षाणिपापवृत्त्यामहीतले ॥ ६० ॥
अन्यस्मिन्वासरेराजन्मार्गभ्रष्टोमहामुनिः ॥ नदिशंविदिशंवेत्तिदेवशर्माद्विजोत्तमः ॥ ६१ ॥ क्षुत्तृषापीडितोत्यं
तंमध्यंगतेदिवाकरे ॥ पतितोवनमध्येतुमार्गभ्रष्टोमहीपते ॥ ६२ ॥ दयाजाताचतेभूरिदृष्ट्वादुःखेनपीडितं ॥
ब्राह्मणंवृद्धमज्ञातंगृहीत्वातंकरेणवै ॥ ६३ ॥ उत्थाप्यपतितंभूमौत्वयोक्तंहितदानृप ॥ प्रसादंकुरुविप्रर्षेआगच्छ
त्वंममाश्रमे ॥ ६४ ॥ जलपूर्णतडागंचपद्मिनीखंडमंडितं ॥ वृक्षैर्मनोहरैर्युक्तंफलैःपुष्पैर्मनोरमैः ॥ ६५ ॥
स्नात्वासुशीतलेतोयेकृत्वाकर्मचनैत्यजं ॥ कुरुविप्रफलाहारंपिबवारिसुशीतलम् ॥ ६६ ॥ सुखेनकुरुविश्राममं

॰म॰ यासंरक्षितःस्वयं ॥ तृप्तिपर्यंतंविप्रर्षेवसगंताततःस्वयं ॥ ६७ ॥ उत्तिष्ठत्वंद्विजश्रेष्ठप्रसादंकर्तुमर्हसि ॥ लब्धसं माहा॰
ज्ञस्तदाविप्रःश्रुत्वाशूद्रस्यभाषितम् ॥६८॥ करेजग्राहतंशूद्रोगतोयत्रजलाशयः ॥ उपविष्टोमहाबाहोछायामाश्रि
॥१४॥ त्यतत्तटे ॥ ६९ ॥ स्नानंचकारविधिवत्पूजयामासकेशवम् ॥ तर्पयित्वापितॄन्देवान्पपौनीरंसुशीतलम्
॥ ७० ॥ विश्रांतोवृक्षमूलेचदेवशर्माद्विजोत्तमः ॥ साष्टांगंमुनयेकृत्वानमस्कारंसहस्त्रिया ॥ ७१ ॥
शूद्रेणपरयाभक्त्याप्रोक्तंविप्रस्यसन्निधौ ॥ आवयोस्तारणार्थायअतिथिस्त्वंसमागतः ॥ ७२ ॥ दर्शनात्तवविप्रर्षे
जातःपापस्यसंक्षयः ॥ अपःफलानिसुस्वादुप्रयच्छास्मैद्विजातये ॥७३॥ मृदूनिरसयुक्तानिसुपक्वानितथाप्रिये ॥
ब्राह्मणउवाच ॥ त्वामहंनैवजानामिस्वजातिंकथयस्वमे ॥ ७४ ॥ नाविज्ञातंहिभोक्तव्यंब्राह्मणस्यापिशूद्रक ॥
शूद्रउवाच ॥ शूद्रोहंद्विजशार्दूलनकार्यःसंशयस्त्वया ॥ ७५ ॥ आत्मजैर्दुर्नयैर्विप्रपरित्यक्तःस्वबांधवैः ॥
तयोःसंवदतोरेवंशूद्रपत्न्याफलानिच ॥ ७६ ॥ दत्तानितस्मैविप्रायतेनभुक्तानितानिवै ॥ अभूत्प्रीतमनाविप्रः
पीत्वानीरंसुशीतलम् ॥ ७७ ॥ सुखंसंप्राप्यसमुनिर्विश्रांतोतरुमूलके ॥ सचशूद्रःसपत्नीकोभुक्त्वाचपुनरागतः
॥ ७८ ॥ स्वागतंतेमुनिश्रेष्ठकुतस्त्वमिहचागतः ॥ शून्याटवीद्विजश्रेष्ठदुष्टसत्त्वभयाकुला ॥ ७९ ॥ निर्मनुष्या
दुःखयुक्तादिवारात्रंभया[illegible]का ॥ ब्राह्मणउवाच ॥ ब्राह्मणोहंमहाभागप्रयागगमनंप्रति ॥८०॥ अहमज्ञातमार्गेण
संप्राप्तोदारुणेवने ॥ ममपु[illegible]प्रभावेनजातोसिवनबांधवः ॥ ८१ ॥ जीवितंमेत्वयादत्तंब्रूहिकिंकरवाणिते ॥ ॥१४॥
भवानपिकुतःप्राप्तोनिर्मनुष्येवनेखलु ॥ ८२ ॥ कोभवान्कारणंकिंचित्कथयस्वममाग्रतः ॥ शूद्रउवाच ॥ वि
दर्भनगरीराज्ञाभीमसेनेनरक्षिता ॥ ८३ ॥ वासोममममहाराष्ट्रेशूद्रोहंपापलंपटः ॥ स्वकर्मविहितोधर्मोमयात्यक्तो

द्विजोत्तम ॥ ८४ ॥ त्यक्तोहंबंधुवर्गैश्चततोहंवनमागतः ॥ कृत्वाजीववधंनित्यंजीवेहंभार्ययासह ॥ ८५ ॥
सांप्रतंपातकात्सम्यक्निर्विण्णोस्मिमहामुने ॥ कुरुष्वानुग्रहंकिंचित्पापमुक्तस्यसांप्रतं ॥ ८६ ॥ ममपुण्यप्रभा
वेनआगतस्त्वंद्विजोत्तम ॥ नमस्करोमियथासौरींपत्न्यासहमहामुने ॥ ८७॥ उपवेशप्रभावेनप्रसादंकर्तुमर्हसि ॥
नान्यादिरुछाम्यहंकिंचिद्विनादेवंजनार्दनं ॥ ८८ ॥ कुरुष्वानुग्रहंकिंचित्प्रसादंऋषिसत्तम ॥ ब्राह्मणउवाच ॥
तवेदृशीमतिर्जातासहस्रांकेशवोपरि ॥८९ ॥ एवमुक्तोगतंपापंपूर्वजन्मशतोद्भवम् ॥ विनान्नतैर्विनातीर्थैर्मुक्तस्त्वं
पापकोटिभिः ९० ॥ ममातिथ्येनभक्त्याचज्ञातंतवहरेःपदं ॥ तस्यपुण्यप्रभावेनमतिर्जातातवेदृशी ॥ ९१ ॥
ध्यात्वासंचिंत्यमनसाज्ञातंपूर्वंविचेष्टितं ॥ पूर्वजन्मनिविप्रस्त्वमवंत्यांधर्मतत्परः ॥ ९२ ॥ सदाध्यापनशीलश्च
सुशीलश्चसदाव्रती ॥ नैकातुद्वादशीविष्णोःकृतादशमिसंयुता ॥ ९३ ॥ तस्यपापप्रभावेनसमस्तंसुकृतंगतं ॥
सर्वंतद्विफलंजातंयथाशूद्रापतिर्द्विजः ॥ ९४ ॥ बहुवर्षसहस्राणिप्राप्तानरकयातना ॥ तस्मादेवत्वयासर्वंपूर्वं
दुष्टंकृतंचिरम् ॥ ९५ ॥ कृतातुदशमीमिश्रातिथिर्विष्णोर्महात्मनः ॥ तेनशूद्रोभवान्जातःपापेचरमतेमतिः
॥ ९६ ॥ धर्मेनरमतेचित्तंदशमीवेधदूषितम् ॥ विदर्भनगरेविप्रअस्तितेपुत्रिकाशुभा ॥९७॥ कृतंतयाविधानोक्तं
हरेरेकादशीव्रतं ॥ प्रदत्तंचतयापुण्यंअखंडैकादशीव्रतम् ॥ ९८॥ धर्मोपरिमतिर्जाताअतःपापस्यसंक्षयः ॥ ते
नपुण्यप्रभावेनएकादश्याव्रतेनच ॥९९ ॥ दशमीवेधजंपापंयमेनपरिमार्जितम् ॥ इहजन्मानियत्पापमन्यजन्म
कृतादपि ॥ १०० ॥ मार्जितानियमेनैवपापानितवसांप्रतम् ॥ तयोर्विवदतोरेवंविष्वक्सेनःसमागतः ॥ १ ॥ व
र्णावरस्वागतंतेतुष्टोहंतेजनार्दनः ॥ विप्रस्यातिथिहेतुत्वाज्जातःपापस्यसंक्षयः ॥ २ ॥ परदत्तेनपुण्येनएकादश्यां

मा० कृतेनच ॥ दशमीवेधजंपापंतवशूद्रक्षयंगतम् ॥ ३ ॥ व्रतंकृत्वाददौपुण्यंदौहित्रेणैवतारितः ॥ पत्न्यासहमहाभा माहा०
गवैनतेयंसमारुहत् ॥ ४ ॥ स्वर्गंगतःसपत्नीकःशूद्रत्वेननृपोत्तम ॥ देवशर्मातुविप्रोवैतीर्थराजंययौपुनः ॥ ५ ॥
॥१५॥ एतत्तेसर्वमाख्यातंयत्त्वयापरिपृच्छितम् ॥ अखंडैकादशीपुण्याप्राप्तस्यातिथ्यकारणात् ॥ ६ ॥ विष्णुभक्तिमती
भार्याराज्यंनिहतकंटकं ॥ राजोवाच ॥ एकादशीविधिंब्रह्मन्मांसम्यक्समुपादिश ॥ ७ ॥ विष्णोःसंप्रीणना
र्थायप्रसादंकर्तुमर्हसि ॥ ऋषिरुवाच ॥ शृणुष्वनृपशार्दूलएकादश्याविधिंशुभम् ॥ ८ ॥ पुरासीद्भगवान्विष्णुर्ना
रदाययदुक्तवान् ॥ तत्तेहंसंप्रवक्ष्यामिउद्यापनविधिंशुभम् ॥ ९ ॥ मार्गशीर्षादिमासेषुद्वादशषुनरोत्तम ॥ व्रतंपु
ण्यमिदंकार्यमखंडैकादशीव्रतम् ॥१०॥ दशम्यांचैवनक्तंचएकादश्यामुपोषणम् ॥ द्वादश्यामेकभुक्तंवैअखंडाभि
तिकथ्यते ॥ ११ ॥ दिवसस्याष्टमेभागेमंदीभूतेदिवाकरे ॥ तद्दिनक्तंविजानीयान्ननक्तंनिशिभोजनम् ॥ १२ ॥
कांस्यंमांसंमसूरान्नंचणकान्कोद्रवांस्तथा ॥ शाकंमधुपरान्नंचपुनर्भोजनमैथुने ॥ १३ ॥ विष्णुभक्तोनरोवापि
दशम्यांदशवर्जयेत् ॥ दशमीविधिरुक्तोयंएकादश्याःकथांशृणु ॥ १४ ॥ असकृज्जलपानंचहिंसाशौचमसत्यता ॥
तांबूलंदंतकाष्ठंचदिवाशयनमैथुने॥१५॥द्यूतक्रीडानिशानिद्रापतितैःसहभाषणम्॥ एकादशसदैतानिविष्णुभक्तस्तु
वर्जयेत् ॥ १६ ॥ अद्यकंभोजनंनास्तिस्त्रीसौख्यंतत्रकेशव ॥ प्रीत्यर्थंतवदेवेशानियमस्तुदिवानिशि ॥ १७ ॥
स्वप्नेंद्रियैःसुवैकल्यद्भोजनंयच्चमैथुनं ॥ दंतांतरविलग्नान्नंक्षमस्वपुरुषोत्तम ॥१८॥ उपावृत्तस्तुपापेभ्योयस्तुवासो ॥१५॥
गुणैःसह ॥ उपवासः सविज्ञेयोनशरीरस्यशोषणं ॥१९॥ पूर्वोक्तानिदशोक्तानिपरान्नंचतथामधु ॥ द्वादश्यांविष्णु
भक्तोवैवर्जयेन्मर्दनादिकं ॥ २० ॥ अद्यमेद्वादशीपुण्यापवित्रापापनाशनी ॥ पारणंचकरिष्यामिप्रसीदगरुड

ध्वज ॥ ११ ॥ विष्णोःसंतारणार्थाययन्मयानियमःकृतः अद्याहंभोजयिष्यामित्वत्प्रसादात्द्विजोत्तम ॥ २२ ॥
अनेनविधिनाकुर्याद्यावद्वर्षसमाप्यते ॥ संपूर्णेतुततोवर्षेकुर्यादुद्यापनंबुधः ॥ २३ ॥ आदौमध्येतथाचांतेव्रतस्यो
द्यापनंस्मृतम् ॥ उद्यापनंनकुर्याद्यःकुष्ठीचांधश्चजायते ॥२४॥ तस्मादुद्यापनंकुर्याद्यथाविभवसारतः ॥ क्रियतेशु
क्लपक्षेचमासेमार्गशिरेशुभे ॥२५॥ आमंत्र्यद्वादशमितान्ब्राह्मणान्विधिकोविदान् ॥ त्रयोदशसपत्नीकंआचार्यं
विधिकोविदं ॥२६॥ यजमानःशुचिःस्नात्वाश्रद्धायुक्तोजितेंद्रियः ॥ पादशौचार्घ्यवस्त्राणिआचार्यायततोर्पयेत् ॥
॥ २७ ॥ आचार्यस्तुततःकुर्यान्मंडलंवर्णकैःशुभैः ॥ चक्राब्जंसर्वतोभद्रंश्वेतवस्त्रेणवेष्टितम् ॥२८॥ जलपूर्णंस
कुंभंचपंचरत्नसमन्वितं ॥ पंचपल्लवसंयुक्तंकर्पूरागरुवासितं ॥२९॥ वेष्टितंरक्तवस्त्रेणताम्रपात्रेणसयुतं ॥ वेष्टितंपु
ष्पमालाभिर्मंडलोपरिविन्यसेत् ॥ ३०॥ तस्योपरिन्यसेद्देवंलक्ष्मीनारायणंनृप ॥ सौवर्णप्रतिमाकार्याकर्षमेकप्र
माणतः ॥ ३१ ॥ वाहनायुधसंयुक्तंप्रमाणंचतुरंगुलम् ॥ मोदंस्वशक्त्याकुर्वीतवित्तशाठ्यविवर्जितम् ॥ ३२॥
ततःसंस्थापयेन्मूर्तिंमंडलाद्द्वादशैवहि ॥ मासानामधिपःपूज्यअखंडव्रतहेतवे ॥ ३३ ॥ मंडलात्पूर्वदिग्भागे
शंखंसंस्थापयेच्छुभं ॥ त्वंपुरासागरोत्पन्नोविष्णुनाविधृतःकरे ॥ ३४ ॥ नमितःसर्वदेवैश्चपांचजन्यनमोस्तुते ॥
ततस्तुस्थंडिलंकार्यंमंडलादुत्तरांदिशि ॥३५॥ संकल्प्यावाहनंकार्यंमंत्रैर्वेदोक्तवैष्णवैः ॥ स्वस्थानेस्थापयेद्विष्णुंस्था
पयेच्चहरिंप्रति ॥ ३६॥ पूजांपुरुषसूक्तेनमंत्रैःपौराणिकैःशुभैः ॥ नैवेद्यानिचकार्याणिमोदकानिबहून्यपि ॥ ३७॥
धूपदीपोपहाराणिकृत्वानीराजनंततः ॥ यक्षकर्दमेनसंपूज्यततःकार्याप्रदक्षिणाः ॥ ३८ ॥ स्वस्तिवाचनकंविप्रैर्न
मस्कारंततोनृप ॥ ततस्तुब्राह्मणैःकार्यमाचार्यक्रमशोजनम् ॥ ३९ ॥ जपश्चपावमानीयमंडलंब्राह्मणंमधु ॥ ते

मा० जोसिशुक्रजंयाचंब्राह्मसामादनंतरं ॥ ४० ॥ पवित्रवतैसूर्यस्यविष्णोर्महासिसंहितं ॥ जपांतेकलशोविष्णुंसोपां माहा०
गमुपरिन्यसेत् ॥ ४१ ॥ विन्यस्यदिवसमुदयंहोमंकुर्यादनुक्रमम् ॥ संस्थाप्यप्रथमंवेदांस्पूजयित्वाविधानतः ॥
॥१६॥ ॥ ४२ ॥ तुष्टुवुश्चततोहोमंकर्तव्यंचरुपूर्वकं ॥ स्वगृह्योक्तविधानेनयजनाग्निक्रियापरम् ॥४३ ॥ चरुद्वयंचकुर्वं
तिपायसंवैष्णवंचरुम् ॥ जुहुयात्पुरुषसूक्तेनचरुणाहुतिषोडशम् ॥ ४४ ॥ तथाचरुगृहीतेनकृतयुक्तावराहुतिम् ॥
प्रादेशमात्रंपालाशसमिधाचघृतप्लुतम् ॥ ४५ ॥ इदंविष्णुरितिमंत्रेणहोतव्याकर्मसिद्धये ॥ शतमेकंचजुहुयाद्द्वि
गुणांचतिलाहुतिः ॥ ४६ ॥ कृतेचवैष्णवेहोमेगृहयज्ञंसमारभेत् ॥ इंधनैश्चरुहोमंतुतिलहोमंक्रमेणतु ॥ ४७ ॥
उभयोःस्वस्तिकंवाच्यंततःपूर्वंसमाचरेत् ॥ ऋत्विजांचततोदद्याद्देवादिगृहदक्षिणाम् ॥४८ ॥ ततस्तुतस्यदेवस्य
दानंदद्याद्यथाविधि ॥ गांचपयस्विनींदद्याद्वृषभंचसुशोभनम् ॥ ४९ ॥ ब्राह्मणांश्चततोदद्यात्त्रयोदशपदानिच ॥
आचार्यंचसपत्नीकंवस्त्रैश्चपरितोषयेत् ॥५०॥ तोषयित्वामहादानैस्तसार्थंचसमर्पयेत् ॥ पंचविंशतिकुंभाश्चसो
दकान्वस्त्रवेष्टितान् ॥ ५१ ॥ ब्राह्मणांश्चततोदद्यात्कृतपारणकोनिशि ॥ भूमिदानंचदातव्यंबंधूनामिष्टभोज
नम् ॥५२॥ पूर्णपात्रंततोदद्यादाचार्यायसदक्षिणम् ॥ पूर्णपात्रप्रदानेनकार्यंसंपूरितंभवेत् ॥ ५३॥ उपवासव्रतं
चैवस्नानंतीर्थंव्रतंलभेत् ॥ विप्रसंभाषितंयस्यसंपूर्णंतस्यतत्फलम् ॥५४॥ वित्तशक्तिर्गृहेनास्तिकृतंचैकादशीव्रतम्
स्वशक्त्यासर्वंकर्तव्यंकुर्यादुद्यापनादिकम् ॥ ५५ ॥ एतत्तेसर्वमाख्यातंअखंडैकादशीव्रतम् ॥ ५६ ॥ इति ॥१६॥
श्रीस्कंदपुराणेमार्गशीर्षमाहात्म्येएकादशोध्यायः ॥ ॥ ११ ॥ ॥ श्रीभगवानुवाच ॥ शृणुपुत्रप्रव
क्ष्यामिजागरस्यचलक्षणम् ॥ येनविज्ञातमात्रेणसुलभोहंसदाकलौ ॥१ ॥ गीतवाद्यंचनृत्यंचपुराणपठनंतथा ॥

धूपंदीपंचनैवेद्यंगंधपुष्पानुलेपनम् ॥२॥ फलार्पणंचश्रद्धांचदानमिंद्रियसंयमं ॥ सत्यान्वितंविनिद्रंचमुदमद्य
जनान्वितम् ॥ ३ ॥ साश्चर्यंचैवरसौत्साहंपापालस्यादिवर्जितं ॥ प्रदक्षिणासमायुक्तंनमस्कारपुरःसुरम् ॥ ४ ॥
नीराजनसमायुक्तमतिहृष्टेनचेतसा ॥ यामेयामेमहाभागकुर्यादारार्तिकंमम ॥ ५ ॥ षड्विंशगुणसंयुक्तमेकाद
श्यांतुजागरम् ॥ यःकरोतिनरोभक्त्यानपुनर्जायतेभुवि ॥ ६ ॥ यएवंकुरुतेभक्त्यावित्तशाठ्यविवर्जितम् ॥
जागरंपरयाभक्त्यासलीनोभवतेमयि ॥ ७ ॥ दष्टाःकलिभुजंगेनस्वपंतेयेदिनेमम ॥ कुर्वंतिजागरंनैवमायापा
शविमोहिताः ॥८॥ प्राप्ताप्येकादशीयेषांकलौजागरणंविना ॥ तेविनष्टानसंदेहोयस्माज्जीवनमध्रुवम् ॥ ९ ॥
उद्धृतंनेत्रयुग्मंवैदत्त्वाविद्धदयेपदम् ॥ कृतंयैनैवपश्यंतिपापिनोममजागरम् ॥१०॥ अभावेवाचकस्याथगीतंनृ
त्यंचकारयेत् ॥ वाचकेसतिदेवेशपुराणंप्रथमंपठेत् ॥ ११ ॥ अश्वमेधसहस्रस्यवाजपेयशतस्यच ॥ पुण्यं
कोटिगुणंपुत्रममजागरणेकृते ॥ १२ ॥ पितृपक्षोमातृपक्षोभार्यापक्षोचमानद ॥ कुलान्युद्धरतेचै
तान्ममजागरणेकृते ॥ १३ ॥ उपोषणदिनेविद्धेप्रारब्धेजागरेसति ॥ स्थानंविहायतत्राहंशापंदत्त्वाव्रजाम्यहं
॥ १४ ॥ अविद्धवासरेयेमेप्रकुर्वंतिहिजागरम् ॥ तेषांमध्येप्रहृष्टःसन्नृत्यंवैप्रकरोम्यहं ॥ १५ ॥ यावद्दिना
निकुरुतेजागरंममसन्निधौ ॥ युगायुतानितावंतिवसतेममवेश्मनि ॥ १६ ॥ नगयापिंडदानेननतीर्थैर्बहुभि
र्मखैः ॥ पूर्वजामुक्तिमायांतित्रिनैकादशिजागरात् ॥ १७ ॥ यःकुर्याज्जागरेपूजांकुसुमैर्ममवासरे ॥ पुष्पेपुष्पे
श्वमेधस्यफलंप्राप्नोतिमानवः ॥ १८ ॥ यःकुर्याद्दीपदानंतुरात्रौजागरणंमम ॥ निमिषेनिमिषेपुत्रलभतेगोयुतंफ
लम् ॥१९॥ योदद्याज्जागरेपुत्रहविष्यान्नसमुद्भवम् ॥ नैवेद्यंलभतेपुण्यंशालिशैलसमुद्भवम् ॥ २० ॥ पकान्न

मा॰ निचयोदद्यात्फलानिविविधानिच ॥ जागरेमेचतुर्वक्त्रलभतेगोशतंफलं ॥ २१ ॥ कर्पूरेणचतांबूलंददातिमम माहा॰
जागरे ॥ मद्भक्तोमत्प्रसादेनसप्तद्वीपाधिपोभवेत् ॥ २२ ॥ जागरेममदेवेशयःकुर्यात्पुष्पमंडपं ॥ सपुष्पकवि
॥१७॥ मानेनक्रीडतेममसद्मनि ॥२३॥ मेजागरेतुयोधूपंसकर्पूरंसगुग्गुलं॥ददातिदहतेपापंजन्मलक्षशतोद्भवम् ॥२४॥
स्नापयेज्जागरेयोमांदधिक्षीरघृतांबुकैः ॥ इहभोगांल्लभेत्सोवैअंतेचपरमांगतिम् ॥ २५ ॥ दिव्यावराणियोदद्यात्फ
लानिविविधानिच ॥ सचिरंवसतेस्वर्गेशतान्यष्टसमानिवै ॥२६॥ दद्यादाभरणंयोमेहेमजंरत्नसंभवम् ॥ सप्तक
ल्पानिवसतेसोत्संगेमत्प्रियोभवेत् ॥२७॥ घृतेनदीपकंयोमेगव्येनचविशेषतः ॥ ज्वालयेज्जागरेरात्रौनिमिषेगोयुतं
फलम् ॥ २८ ॥ जागरेमेचतुर्वक्त्रकर्पूरेणचदीपकम् ॥ योज्वालयेतनीराजंकपिलादानजंफलम् ॥ २९ ॥
यःपुनःकुरुतेदीपंगीतंनृत्यंचपूजनम् ॥ शतक्रतुसमंपुण्यंव्रतैर्दानशतैरपि ॥३० ॥ स्वयंयःकुरुतेदीपंविलज्जोजा
यतेयदि ॥ सलभेन्निमिषार्धेनकोटियज्ञफलंकृतम् ॥ ३१ ॥ निवारयतियोगीतंनृत्यंजागरणेमम ॥ षष्टिर्युगस
हस्राणिपच्यतेरौरवादिषु ॥ ३२ ॥ नृत्यमानस्यमर्त्यस्ययेकेचिन्निकटेगताः ॥ विमुक्ताधर्मराजेनमुक्तायांतिचम
त्पदम् ॥ ३३ ॥ नृत्यमानस्यमर्त्यस्यउपहासंकरोतियः ॥ जागरेयातिनिरयंयावदिंद्राश्चतुर्दश ॥ ३४ ॥ जा
गरेममयःकुर्याद्भक्त्यापुस्तकवाचनम् ॥ श्लोकसंख्यायुतान्येववसतेममसन्निधौ ॥ ३५ ॥ प्रदक्षिणाप्रदानेनय
त्फलंकथितंमम ॥ नतत्कोटिमखैःपुण्यंयोवैसंख्यैरवाप्यते ॥ ३६ ॥ दीपमालांममाग्रेवैयःकुर्याज्जागरेसुत ॥ ॥१७॥
विमानकोटिसंयुक्तंआकल्पंवसतेदिवि ॥ ३७ ॥ ममनामसहस्राणिजागरेपठतेहियः ॥ युगकोटिसहस्राणि
श्वेतद्वीपेवसेन्नरः ॥ ३८ ॥ तस्माज्जागरणंकार्यंपक्षयोःकृष्णशुक्लयोः ॥ योगीतंपठतेरात्रौममनामसहस्रकम्

माप्नुयात् ॥ धेनुदानंतुयःकुर्याज्जागरेममपुत्रक ॥ ४० ॥ सलभेन्नात्र
वपुण्यानांश्रेष्ठंपुण्यंमहीतले ॥ ४१ ॥ द्वादशीजागरेपुत्रप्रसिद्धाभुवनत्रये ॥
गरो ॥ ४२ ॥ नतेषांपुनरावृत्तिर्ममलोकात्कथंचन ॥ प्रोत्साहयित्वालोकान्यः
॥ प्राप्नोतिचक्रवर्तित्वंसत्यंमेव्याहृतंसुत ॥ सन्मानिताककुत्स्थेनरात्रौजागरकारि
चैवदानेनप्राप्तंराज्यंसुदुर्लभम् ॥ येकेचिद्गायकाविप्रावाद्यकानर्तकाश्चये ॥ ४५ ॥ नर्तं
रत कसनातने ॥ दुर्योनिषुगतैःसर्वैःकृत्वाजागरणंमम ॥ ४६ ॥ संप्राप्यपृथिवीशत्वंसकामै
वह्म कामामुक्तिमापन्नाःश्वपचाद्यास्तुजागरात् ॥ ४७ ॥ विवेकोनास्तिवर्णानांममजागरकारि
शि लौपावनंध्यानंनकलौजाह्नवीजलम् ॥ ४८ ॥ नकलौपावनंजाप्यंसुक्तैकंजागरंमम ॥ द्वादशीदि
यथा
कायेनमकुर्वंतिहिजागरम् ॥४९॥ तेधन्यास्तेकृतार्थाश्चैकालिकालेनसंशयः ॥ नभूयान्मानुषेलोकेद्वादशीविमु
तमरः ॥ ५० ॥ अतीतानागतान्वापितारयेन्नरकाद्विसः ॥ वरमेकोगुणैर्युक्तोकिंजातैर्बहुभिःसुतैः ॥ ५१ ॥
द्वादशीजागरात्सर्वान्तारयेद्योहिपूर्वजान् ॥ माहात्म्यंपठतेभक्त्याममोक्तंजागरोद्भवम् ॥ ५२ ॥ द्वादशीसंभवं
पुत्रसकुलंतारयेच्छतम् ॥ अगम्यागमनेपापंअभक्षस्यापिभक्षणे ॥५३ ॥ पापंविलयमायातिकृतेजागरणेहरेः॥
अज्ञानाद्यत्कृतंपापंज्ञात्वायत्पातकंकृतम् ॥ ५४ ॥ पूर्वजन्मार्जितंपापंइहजन्मनियत्कृतम् ॥ तत्सर्वंविलयंया
तिकृतेजागरणेमम ॥ ५५ ॥ सिध्यंतिसर्वकार्याणिमनसाचिंतितानिच ॥ द्वादश्यावैचतुर्वक्त्ररात्रौजागरणेकृते
॥ ५६ ॥ द्वादशीजागरेणैवमुक्तिंगच्छंतिमानवाः ॥ नतत्पुण्यंकुरुक्षेत्रेप्रयागेवसतांकलौ ॥ ५७ ॥ माहात्म्यं

मा० पठतांपुसांयत्फलंद्वादशीषुच ॥ नाश्वमेधसहस्रैस्तुतीर्थकोट्यवगाहनात् ॥ ५८ ॥ तत्फलंप्राप्यतेपुत्रद्वाद माहा०
॥ शीवासरेकृते ॥ पठेद्वाशृणुयाद्वापिमाहात्म्यंद्वादशीभवम् ॥ ५९ ॥ सर्वपापविशुद्धात्मालभतेशाश्वतंपदम् ॥
॥ सर्वेतुष्टाःसमस्ताश्चसौम्यास्तस्यसदाग्रहाः ॥ ६० ॥ संततेर्नवियोगस्तुद्वादशीयस्यकारणम् ॥ ममकीर्तिंरुचि
र्नित्यंनविपद्यातिकर्हिचित् ॥ ६१ ॥ रणेराजकुलेचैवसर्वदाविजयीभवेत् ॥ धर्मोपरिमतिर्नित्यंभक्तिर्ममसुनिर्म
ला ॥ ६२ ॥ पातकंनैवलिंप्येतद्वादशीभक्तितोनरम् ॥ प्रेतत्वंनैवतस्यास्तिकृतेजागरणेमम ॥ ६३ ॥ एकाद
फल॰शीनस्यपरलोकगतिर्नहि ॥ तस्मात्सर्वप्रयत्नेनकलौकार्यंहितद्दिनम् ॥ ॥ इतिश्रीस्कंदपुराणेमार्गशीर्ष
यःपुनःकु॰दशोध्यायः ॥ १२ ॥ ॥ छ ॥ ॥ श्रीभगवानुवाच ॥ ततःप्रभातेद्वादश्यांकार्योमत्स्योत्सवो
यतेयदि ॥ ॰र्षेशुक्लपक्षेयथाविध्युपचारतः ॥ १ ॥ अथमार्गशिरेमासेदशम्यांनियतात्मवान् ॥ कृत्वादेवार्चं
हस्ताणिपच्यतेरौ॰गाविधि ॥ २ ॥ शुचिवासाःप्रसन्नात्माहव्यमन्नंसुसंस्कृतम् ॥ पक्त्वापंचपदंगत्वापुनःशौचं
त्पदम् ॥ ३३ ॥ नृ॰चाष्टांगुलमानंतुक्षीरवृक्षसमुद्भवम् ॥ भक्षयेद्दंतकाष्ठंतुततश्चाचम्ययत्नतः ॥ ४ ॥ दृष्ट्वा
गरेममयःकुर्याद्भक्त्यापु॰गदाधरम् ॥ शंखचक्रगदापाणिंकिरीटिंपीतवाससम् ॥ ५ ॥ प्रसन्नवदनांभो
त्फलंकथितंमम ॥ नतत्॰त्वापुनर्जलंहस्तेगृहीत्वाजानुमध्यगम् ॥६॥ ध्यात्वार्घ्यंदापयेत्तत्रकरतोयेनमानवः॥
विमानकोटिसंयुक्तंआकल्पंव॰॰च ॥ ७ ॥ एकादश्यांनिराहारःस्थित्वाहमपरेह्न्यहम् ॥ भोक्ष्यामिपुंडरीकाक्ष ॥१८॥
श्वेतद्वीपेवसेन्नरः ॥ ३८ ॥ तस्मा॰चोराचौममममूर्तेश्चसान्निधौ ॥ जपेन्नारायणायेतिस्वयंतत्रविधानतः ॥ ९ ॥
॰नरांवातडागंवागृहेवानियतात्मवान् ॥ १० ॥ आनीयमृत्तिकांशुद्धां

द्रोभवेन्नरः ॥ ११ ॥ धारणंपोषणंत्वत्तोभूतानांदेविसर्वदा ॥ तेसर्वा
॥ ब्रह्मांडोदरतीर्थानिकरैःस्पृष्टानिदैवतैः ॥ तेनेमांमृत्तिकांग्राह्यपूतांकुरुहि
तथातोयंप्रसाद्यात्मानमालिपेत् ॥ त्रिःकृत्वाशेषमृदयापिंडमालिप्यवैजले ॥१५॥
कच्छपचारतः ॥ स्नात्वाचावश्यकंकृत्वापुनर्ममगृहंव्रजेत् ॥१६॥ तत्राराध्यमहायोगि
शवायनमःपादौकटिंदामोदरायच ॥ १७ ॥ जानुयुग्मंनृसिंहायऊरूश्रीवत्सधारिणे ॥
वक्षःश्रीपतयेतथा ॥ १८ ॥ त्रैलोक्यविजयायेतिबाहूसर्वात्मनेशिरः ॥ रथांगधारिणेचक्रंशं
शिरः ॥ १९ ॥ गंभीरायेतिचगदामंभोजंशांतमूर्तये ॥ एवमभ्यर्च्यदेवेशंदेवंनारायणंप्रभुम् ॥२०॥
यथाःकुंभांश्चतुरःस्थापयेद्बुधः ॥ जलपूर्णान्समाल्यांश्चसितचंदनलेपितान् ॥ २१ ॥ तरुपल्लवसुग्रीवा
कायेनस्रावगुंठितान् ॥ छादितांस्ताम्रपात्रैश्चतिलपूर्णैःसकांचनैः ॥ २२ ॥ चत्वारस्तेसमुद्रास्तुकलशाःसं
तमस्तताः ॥ तेषांमध्येशुभंपीठंस्थापयेद्वस्त्रगर्भितम् ॥ २३ ॥ तस्मिन्हैमंचरौप्यंचताम्रंवादारवंतथा ॥ अ
लाभेसर्वपात्राणांपालाशंपत्रमीक्षते ॥ २४ ॥ तोयपूर्णंततःकृत्वातस्मिन्पात्रेततोन्यसेत् ॥ सौवर्णंमत्स्यरूपेण
कृत्वादेवंजनार्दनम् ॥ २५ ॥ वेदवेदांगसंयुक्तंश्रुतिस्मृतिविभूषितम् ॥ तत्रानेकविधैर्भक्ष्यैःफलैःपुष्पैश्चशोभित
म् ॥ २६ ॥ गंधधूपैश्चवस्त्रैश्चअर्चयित्वायथाविधि ॥ रसातलगतावेदायथादेवत्वयोद्धृताः ॥ २७ ॥ मत्स्यरू
पेणतद्वन्मांभवादुद्धरकेश्वर ॥ एवमुच्चार्यतस्याग्रेजागरंनैवकारयेत् ॥२८॥ चतुर्णांब्राह्मणानांचचतुरोदापयेद्घ
टान् ॥ पूर्वंचविष्णवेदद्यात्छंदोगेदक्षिणंतथा ॥ २९ ॥ यजुःशाखान्वितेदद्यात्पश्चिमंघटमुत्तमम् ॥ उत्तरंकाम

॥• तोदद्यादेषएवविधिःस्मृतः ॥ ३० ॥ ऋग्वेदःप्रीयतांपूर्वेसामवेदस्तुदक्षिणे ॥ यजुर्वेदःपश्चिमतोअथर्वाश्चोत्तरेण माहा•
तु ॥ ३१ ॥ अनेनक्रमयोगेनप्रीयतामितिवाचयेत् ॥ मत्स्यरूपंतुसौवर्णंआचार्यायनिवेदयेत् ॥ ३२ ॥ गंधधू
॥ पादिवस्त्रैश्चसंपूज्यविधिवत्क्रमात् ॥ यस्त्विमंसरहस्यंचमंत्रेणैवोपपादयेत् ॥ ३३ ॥ विधानंविधिवत्कृत्वादाता
॥ कोटिगुणोत्तमम् ॥ प्रतिपद्यगुरुंयस्तुमोहाद्विप्रतिपद्यते ॥ ३४ ॥ सजन्मकोटिनरकेपच्यतेपुरुषाधमः ॥ विधा
नस्यप्रवर्त्तियोगुरुरित्युच्यतेबुधैः ॥ ३५ ॥ एवंदत्त्वाविधानेनद्वादश्यांमांसमर्चयेत् ॥ विप्राणांभोजनंदद्यात्यथा
फलंदक्षिणं ॥ ३६ ॥ भूरिणापरमान्नेनततःपश्चात्स्वयंनरः॥ भुंजीतसहितोविप्रैर्वाग्यतःसंयतेंद्रियः ॥३६॥
यःपुनः...यस्तुकुर्यान्मत्स्योत्सवंनरः॥ तस्यपुण्यफलंचाग्रेशृणुसत्यवतांवर ॥३७॥ यदिवर्षसहस्राणांसहस्रा
यतेयदि ॥ आयुश्चब्रह्मणस्तुल्यंभवेद्यदिमहाव्रत ॥ ३८॥ तदावैअस्यधर्मस्यफलंकथयितुंभवेत् ॥ यइमंश्रा
हस्राणिपच्यतेरौ...ल्पमुत्तमम् ॥ ३९ ॥ शृणोतिसर्वपापैस्तुसर्वैरेवविमुच्यते ॥४०॥ ॥ इतिश्रीस्कंदपुराणे
त्पदम् ॥ ३३ ॥ ...ध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ श्रीभगवानुवाच ॥ येत्वयावैकृतापूर्वप्रश्नाःप्रश्नविदां
गरेममयःकुर्याद्भक्त्या...नेनिशामयसुनिश्चितम् ॥ १ ॥ सहोमासेचदेवोवैकीर्तियुक्तोहिकेशवः ॥ तस्यपूजा
...॥ २ ॥ ब्राह्मणंकेशवंरूपंतत्पत्नीकीर्तिताशुभा॥ दंपतीविधिवत्पूज्यौवस्त्राभरणधे
त्फलंकथितंमम ॥ नतत...
...समर्जितोहंनसंशयः ॥ तस्मादवश्यंसंपूज्यौदंपतीममतुष्टिदौ ॥४॥ दानंचविवि ॥१९॥
विमानकोटिसंयुक्तंआकल्पंवसेत...
...भूमिदानंचअन्नदानंविशेषतः ॥ ५ ॥ वस्त्रदानंतथाशय्यातथालंकरणा
श्वेतद्वीपेवसेन्नरः ॥ ३८ ॥ तस्मा...
...म् ॥ ६ ॥ सर्वेषामेवदानानांविशेषेणत्रितंस्मृतम् ॥ वसुंधरातथाधे

...त्रिकं वत्स भवेत्प्रीतिर्ममातुला ॥ तस्मान्नरैस्तुकर्तव्यंसहोमासेत्रिकंशुभम्
...वोक्तोमयानघ ॥ पूजास्नानंचदानंचविधिरेषनसंशयः ॥९॥ मार्गशीर्षेसमग्रे
...श्चयोद्विजान्भक्त्यासमुच्येत्व्याधिकिल्बिषैः ॥ १० ॥ कृषिभाग्योबहुधनोबहुधा
...हुनोक्तेनशृणुगुह्यंपरंमम ॥ ११ ॥ हुतभुक्ब्राह्मणश्चैवदनंममानद ॥ यथामेब्राह्म
...ः ॥१२॥ ब्राह्मणाख्येमुखेपुत्रहुतंकोटिगुणंभवेत् ॥ अग्न्याख्यंब्राह्मणाधनिंस्वतंत्राब्राह्म
...शर्करंसर्पियुतंपायसंशशिसन्निभम् ॥ होतव्यंब्राह्मणमुखेममतुष्टिकरंसुत ॥१४॥ शुभमंड
...लुतफेणिकयाघृतपूरयुतम् ॥ यजविप्रमुखेममतुष्टिकरंयदिचेच्छसिदारसुतादिसुखम् ॥ १५ ॥
...भसौरभदंशुभभक्तयुतत्वथमुद्गयुतम् ॥ सुरभीकृतपुष्कलसर्पियुतंकुरुविप्रमुखेहवनंहिसहे ॥१६॥
...भसर्पिषिचक्वथितंबहुखारिकचारुफलैःसितया ॥ सहकर्पुरनारिफलेनसमंकुरुशीकरकंसुतशुभ्रकरम्
...७ ॥ व्यंजनानिचशुभ्राणिमनोज्ञानिप्रियाणिच ॥ कर्तव्यानिसहोमासेब्राह्मणायचतुर्मुख ॥ १८ ॥ प्रिया
शिखरिणीकार्या अन्यत्तेषांप्रियचयत् ॥ कृत्वायोभोजयेत्विप्रान्श्रद्धयापरयासुत ॥ १९ ॥ रसास्वादनपूर्वंहिभुं
जानोह्यियथायथा ॥ तथातथामहाप्रीतिर्जायतेभुविदुर्लभा ॥ २० ॥ तस्मात्तावत्तथाकार्यंयथातुष्यंतिब्राह्मणाः ॥
तैस्तुष्टैश्चाप्यहंतुष्टोभवामीतिनसंशयः ॥ २१ ॥ श्रद्धस्वत्वंचतुर्वक्त्रोनतेमिथ्यावदाम्यहम् ॥ एतद्गुह्यंमयाप्रोक्तं
श्रेयोर्थंतवमानद ॥२२॥ आक्रोशंयांतियदितेअथवाप्रहरंतिचेत् ॥ तथापितेनमस्यावैममप्रीत्याचमानद ॥२३॥
एवंकार्यंसदापुत्रमार्गशीर्षेविशेषतः॥उक्तंभगवताब्रह्मन्भोक्तव्यंकिंशृणुष्वतत् ॥२४॥ भोक्तव्यंममचोच्छिष्टंमम

...वक्ता... ...शिष्य... ...यथा... कायेनमन... तमक...

मा०मा० ॥२०॥ भक्तिपरायणैः ॥ पवित्रकरणंपुत्रपापिनामपिमुक्तिदम् ॥ २५ ॥ ममाशनस्यशेषंचयोभुनक्तिदिनेदिने ॥ सि
क्थेसिक्थेभवेत्पुण्यंचांद्रायणशतंसुत ॥ २६ ॥ अवशिष्टंतथोच्छिष्टंभक्तानांभोजनद्वयम् ॥ नान्यद्वैभोजनंतेषां
भुक्त्वाचांद्रायणंचरेत् ॥ २७ ॥ अनर्पयित्वायोभुंक्तेअन्नपानादिकंचयत् ॥ शुनोविष्ठासमंचान्नंपानंचमदिरा
समम् ॥ २८ ॥ तस्मात्समर्पयेत्पुत्रअन्नपानादिचौषधम् ॥ भक्षयेत्परयाभक्त्यानिष्पापशुचिकारकम् ॥ २९॥
तीर्थयज्ञाधिकफलंकलिदोषविनाशनम् ॥ ममोच्छिष्टंसुगदितमपिदुष्कृतकारिणाम् ॥ ३० ॥ अन्येषांदेवतानां
लपोदाग्गृह्णीयाच्चभक्तितः ॥ अभक्तानांचपक्वान्नंभुक्त्वाचनरकंव्रजेत् ॥ ३१ ॥ वक्तव्यंममयत्प्रोक्तंतच्छृणुष्वसमा
फलम्नाप॥ कथयिष्येतवप्रीत्याअपिगुह्यतमंपरम् ॥ ३२ ॥ ममनामप्रवक्तव्यंसहेचैवविशेषतः ॥ कृष्णकृष्णेति
यःपुनःकुरुअप्रीतिकरंपरम् ॥ ३३ ॥ ममनामप्रवक्तव्यंसहेचैवविशेषितः ॥ कृष्णकृष्णेतिवक्तव्यंममप्रीतिकरंपर
यतेयदि ॥ सत्यप्रतिज्ञैषाचमेपुत्रजानंतिससुरासुराः ॥ मनसाकर्मणावाचायोमेशरणमागतः ॥ ३४ ॥ सर्वेसर्व
हस्राणिपच्यतेरौरव्यनिहलौकिकीम् ॥ सर्वोत्कृष्टंचवैकुंठंमत्प्रियांकमलामपि ॥ ३५ ॥ कृष्णकृष्णेतिकृष्णेतियो
त्पदम् ॥ ३३ ॥ नृोनि जलंभित्त्वायथापद्मंनरकादुद्धराम्यहम् ॥ ३६ ॥ विनोदेनापिदंभेनगर्वाल्लोभाच्छलादपि॥यो
गरेममयःकुर्याद्भक्त्यापु ॥ निनावसीदति ॥ ३७ ॥ येवैवदंतिकृष्णेतिमरणेपर्युपस्थिते ॥ यदिपापयुताःपुत्रनपश्यं
तफलंकथितंमम ॥ नतत्कोटिंवयासिपापानिकृतान्यपिचकृत्स्नशः ॥ अंतकालेपिकृष्णेतित्यक्त्वामामेत्यसंशयम् ॥२०॥
विमानकोटिसंयुक्तंआकल्पंवसतोपिवदेद्यदि ॥ ध्रौवंपदमवाप्नोतिमरणेपर्युपस्थिते ॥ ४० ॥ श्रीकृष्णेतिकृतो
श्वेतद्वीपेवसेन्नरः ॥ ३८ ॥ तस्माज्जपतेतत्रस्वर्गेतिंप्रेतनायकः ॥ ४१ ॥ श्मशानेयदिरथ्यायांकृष्णकृष्णेतिजल्प

माहा०

. ॥ ४२ ॥ दर्शनान्ममभक्तानांमृत्युमाप्नोतियःक्वचित् ॥ विनामत्स्मर
॥ पापानलस्यदीप्तस्यभयंमाकुरुपुत्रक ॥ श्रीकृष्णनाममेघोत्थैःसिच्यतेनीर
स्यतीक्ष्णदंष्ट्रस्यकिंभयम् ॥ श्रीकृष्णनामदारूत्थवह्निदग्धःसनश्यति ॥४५॥
योगिनाम् ॥ भेषजंनास्तिमर्त्यानांश्रीकृष्णस्मरणंविना ॥ ४६ ॥ प्रयागेचतथा
॥ सरस्वतीकुरुक्षेत्रेतद्वत्श्रीकृष्णकीर्तनम् ॥ ४७ ॥ भवांभोधिनिमग्नानांमहापापोर्मि
नवानांचश्रीकृष्णस्मरणंविना॥४८॥मृत्युकालेपिमर्त्यानांपापिनांतदनिच्छताम्॥पापिनांना
स्मरणंविना ॥४९॥ तत्रपुत्रगयाकाशीपुष्करंकुरुजांगलम् ॥ प्रत्यहंमंदिरेयस्यकृष्णकृष्णेति
५० ॥ जीवितंजन्मसाफल्यंमुखंतस्यैवसार्थकम् ॥ सततंरसनायस्यकृष्णकृष्णेतिजल्पति ॥५१॥
रितंयेनहरिरित्यक्षरद्वयम् ॥ बद्धःपरिकरस्तेनमोक्षायगमनंप्रति ॥ ५२ ॥ नाम्नोस्ययावतीशक्तिःपापनि
र्हरणेहरेः ॥ तावत्कर्तुंनशक्नोतिपातकंपातकीजनः ॥ ५३ ॥ नापविद्धंभवेत्तस्यशरीरंनैवमानसम् ॥ नचपापं
नवक्तव्यंकृष्णकृष्णेतिकीर्तनात् ॥ ५४ ॥ श्रीकृष्णेतिवचःपथ्यंनत्यजेयःकलौनरः ॥ पापामयोवैनभवेत्कलौत
स्यैवमानसे ॥ ५५ ॥ श्रीकृष्णेतिप्रजल्पंतंदक्षिणाशापतिर्निशम् ॥ श्रुत्वामार्जयतेपापंतस्यजन्मशतार्जितम्
॥ ५६ ॥ चांद्रायणशतैःपापंपराकाणांसहस्रकैः ॥ यन्नाशयतितद्यातिकृष्णकृष्णेतिकीर्तनात् ॥ ५७ ॥ ना
न्याभिर्नामकोटीभिस्तोषोमेप्रभवेत्क्वचित् ॥ श्रीकृष्णेतिकृतोच्चारेप्रीतिरेवाधिकारिका ॥ ५८ ॥ चंद्रसूर्योपरा
गैस्तुकोटिभिर्यत्फलंस्मृतम् ॥ तत्फलंसमवाप्नोतिकृष्णकृष्णेतिकीर्तनात् ॥ ५९ ॥ गुरुदाराभिगमनहेमस्ते

यादिपातकम् ॥ श्रीकृष्णकीर्तनाद्यातिधर्मतत्त्वंहिमंयथा ॥ ६० ॥ युक्तोयातिमहापापैरगम्यागमपातकैः ॥ विमु
च्येतांतकालेपिसकृच्छ्रीकृष्णकीर्तनात् ॥६१॥ अविशुद्धमनायस्तुविनाप्याचारवर्तनात् ॥ प्रेतत्वंसोपिनाप्नोति
अंतेश्रीकृष्णकीर्तनात् ॥ ६२ ॥ मुखेभवतुसाजिह्वासतीयातुरसातलम् ॥ नसाचेत्कलिकालेतुश्रीकृष्णगुणवादि
नी ॥६३॥ स्ववक्त्रेपरवक्त्रेचवंध्याजिह्वाप्रयत्नतः ॥ कुरुतेनकलौपुत्रश्रीकृष्णगुणकीर्तनम् ॥ ६४ ॥ पापंबुद्ध
मुखेतस्यजिह्वारूपेणतिष्ठति ॥ यानवक्तिदिवारात्रौगुणान्श्रीकृष्णसंभवान् ॥ ६५ ॥ पततांशतखंडासासाजि
ल्प ह्वारोगरूपिणी ॥ श्रीकृष्णकृष्णकृष्णेतिश्रीकृष्णेतिप्रजल्पति ॥ ६६ ॥ श्रीकृष्णनाममाहात्म्यंप्रातरुत्थाययःपठे
फलम्नाय त्तस्याहंश्रेयसांदाताभवाम्येवनसंशयः ॥ ६७ ॥ श्रीकृष्णनाममाहात्म्यंत्रिसंध्यंतुपठेन्नरः ॥ सर्वान्कामान
यःपुनःकुरुअ प्तःपरमांगतिम् ॥ ६८ ॥ ॥ इतिश्रीस्कंदपुराणेमार्गशीर्षमाहात्म्येचतुर्दशोध्यायः ॥१४॥ ॥ छ॥
यतेयदि ॥ सत्व्य अ ॥ शृणुध्यानंचतुर्वक्त्रवक्ष्येहंप्रीतिमांस्तव ॥ श्रुतेनैवचसौभाग्यंलभतेमानवोभुवि ॥ १ ॥ अ
हस्राणिपच्यतेरौरव्य हैमस्थलोद्भासिरत्नस्फुरन्मंडपांतः ॥ लसत्कल्पवृक्षोदितोद्दीप्तरत्नस्थलाधिष्ठितांभोजपीठा
त्पदम् ॥ ३३ ॥ नोनि नीलमेघाभमत्यंतचारुगुडस्निग्धवक्रांतविस्रस्तकेशम् ॥ अलिव्रातपर्याकुलोत्फुल्लपद्म
गरेममयःकुर्याद्भक्त्यापु ॥ जम् ॥ ३ ॥ चलत्कुंडलोद्भासितोत्फुल्लगंडंसुघोषंसुशोणाधरंसुस्मितास्यम् ॥ अनेकोल्लस
त्फलंकथितंमम ॥ ननत्कास वैवांसुनेत्रम् ॥ ४ ॥ समुद्भूसरोरःस्थलंधेनुधूल्यासुपुष्टांगमष्टापदाकल्पदीप्तम् ॥ ॥२१॥
विमानकोटिसंयुक्तंआकल्पंवसतो क्वणत्किंकिणीजालदाम्ना ॥ ५ ॥ हसंतंलसद्बंधुजीवप्रसूनप्रभापाणिपादांबु
श्वेतद्वीपेवसेन्नरः ॥ ३८ ॥ तस्माज्ज्ञ पतस्तेदधानंनवंशुद्धहयंगवीनम् ॥ ६ ॥ महीभारभूतामराराातियूथान

...पंकानांचवृंदेनवीतंसुरेंद्रादिभिर्वंदितंदेववंदैः ॥ ७ ॥ उषःकालउ
...दववंदैः ॥ सदाभकितश्चापिहैयंगवीनैर्विमिश्रेणदध्नाचदुग्धेनकृष्णम् ॥
...ः प्रत्यहंशश्वदास्तिक्ययुक्तः ॥ लभेत्सोचिरेणैवलक्ष्मींसमग्रामिहप्रेत्यशुद्धंप
...पुत्रआदौलोकमनोहरम् ॥ श्रीमद्दामोदराख्यंहिशृणुतस्याधिकारणः ॥ १० ॥ अ
...स्त्वयासुत ॥ यत्नेनगोपनीयंचरहस्यंशीघ्रसिद्धिदम् ॥ ११ ॥ अलसंमानिनंकृछ्रंदंभमोह
...रोगिणंकुद्धंग्रामिणंभोगलालसम् ॥ १२ ॥ असूयामत्सरग्रस्तंशठंपरुषवादिनम् ॥ अन्याये
...रतंसदा ॥ १३ ॥ विदुषांवैरिणंनित्यंअज्ञंपंडितमानिनम् ॥ भ्रष्टव्रतंक्लिष्टवृत्तिंपिशुनंदुष्टमानस
...बह्वाशिनंक्रूरचेष्टंअग्रगम्यंदुरात्मनम् ॥ कृपणंपापिनंरौद्रमाश्रितानांभयंकरम् ॥ १५ ॥ एवमा
...शिष्यत्वेनपरिग्रहेत् ॥ गृह्णीयाद्यदितद्दोषंप्रायोगुरुमुपस्पृशेत् ॥ १६ ॥ अमात्यदोषोराजानंजायादो
...यथा ॥ तथाशिष्यकृतोदोषोगुरुंप्राप्नोत्यसंशयम् ॥ १७ ॥ तस्माच्छिष्यंगुरुर्नित्यंपरीक्ष्यैवंपरिग्रहेत् ॥
कायेनमनसावाचागुरुशुश्रूषणेरतम् ॥ १८ ॥ अस्तेयवृत्तिमास्तिक्येरतंमोक्षकृतोद्यमम् ॥ ब्रह्मचर्यरतंनित्यंदृढव्र
तमकल्मषम् ॥ १९ ॥ प्रसन्नहृदयंशुद्धमशठंविमलाशयम् ॥ परोपकाराभिरतंपरार्थेविगतस्पृहम् ॥ २० ॥ स्ववि
त्तचित्तदेहैश्चपरितोषरतंगुरोः ॥ आश्रितानांतथापुत्रपरितोषकरंशुचिम् ॥ २१ ॥ ईदृग्विधायशिष्यायमंत्रंदद्यात्तुना
न्यथा ॥ यद्यथावदंतेतस्मिन्देवताशापआपतेत् ॥ २२ ॥ शृणुपुत्रप्रवक्ष्यामिगुरोरपिचलक्षणम् ॥ एभिस्तुलक्षणैर्युक्तोगु
रुरेवभवेन्नृणाम् ॥ २३ ॥ मच्चित्तःसुप्रशांतात्माविमृत्युश्चसुहृन्नृणाम् ॥ साधुर्महांश्चदांतश्चसगुरुःपरिकीर्तितः ॥ २४ ॥

 ममव्रतधरोनित्यंवैष्णवानांसुसंमतः ॥ मदाश्रयकथासक्तोममोत्सवरतःसदा ॥२५॥ कृपासिंधुःससंपूर्णःसर्वस 
त्त्वोपकारकः ॥ निस्पृहःसर्वतःसिद्धःसर्वविद्याविशारदः ॥२६॥ सर्वसंशयसंछेत्तानलसोगुरुराहृतः ॥ ब्राह्मणःसर्व
 कालज्ञोकुर्यात्सर्वेष्वनुग्रहः ॥२७॥ पूर्वोक्तलक्षणैर्युक्तःशिष्यईदृग्विधोगुरोः ॥ गृह्णीयात्पुत्रतन्मंत्रंमार्गशीर्षेमहायने
॥२८॥ वैष्णवानांव्रतानांचकुर्यात्स्वीकरणंबुधः ॥ मत्प्रियंशृणुयाच्छश्वच्छ्रीमद्भागवतंपरम् ॥२९॥ श्रीमद्भागवतं
नामपुराणंलोकविश्रुतम् ॥ शृणुयाच्छ्रद्धयायुक्तोममसंतोषकारकम् ॥३०॥ नित्यंभागवतंयस्तुपुराणंपठतेनरः ॥
फलम्नाय भवेत्तस्यकपिलादानजंफलम् ॥३१॥ श्लोकंश्लोकार्धपादंवानित्यंभागवतोद्भवम् ॥ पठेच्छृणोतिवाभ
यःपुनःकुरु स्तफलंलभेत् ॥३२॥ यःपठेत्प्रयतोनित्यंश्लोकंभागवतंसुत ॥ अष्टादशपुराणानांफलंप्राप्नोतिमानवः
यतेयदि ॥ सत् यंममकथायत्रयत्रातिष्ठतिवैष्णवः ॥ कलिबाह्यानरास्तेवैयेर्चयंतिसदामम ॥३४॥ वैष्णवानितुशास्त्रा
हस्राणिपच्यतेरौरवे यः ॥ सर्वपापविनिर्मुक्ताभवंतिसुरवंदिताः ॥३५॥ येर्चयंतिगृहेनित्यंशास्त्रंभागवतंकलौ ॥
त्पदम् ॥ ३३ ॥ नृणां प्रीतोभवाम्यहम् ॥३६॥ यावद्दिनानिहेपुत्रशास्त्रंभागवतंगृहे ॥ तावत्पिबंतिपितरःक्षीरंस
गरेममयःकुर्याद्भक्त्यापु ॥ छंतिवैष्णवेशास्त्रंभक्त्याभागवतंहिये ॥ कल्पकोटिसहस्राणिममलोकेवसंतिते ॥३८॥
त्फलंकथितंमम ॥ नतत्कास नरः ॥ प्रीणितास्तैश्चविबुधायावदाभूतसंप्लवम् ॥३९॥ श्लोकार्धंश्लोकपादंवावरंभा
विमानकोटिसंयुक्तआकल्पंवसतोः पुन्यैःशास्त्रसंग्रहैः ॥४०॥ नयस्यतिष्ठतेशास्त्रंगृहेभागवतंकलौ ॥ नतस्यपुन 
श्वेतद्वीपेवसेन्नरः ॥ ३८ ॥ तस्माज्ज्ञ थंसवैष्णवोज्ञेयःशास्त्रंभागवतंकलौ ॥ गृहेनतिष्ठतेयेषांश्वपचादधिकाहि
स्त्रसंग्रहः ॥ वैष्णवैस्तुसदाभक्त्यातुष्ट्यर्थंममपुत्रक ॥ ४३ ॥ यत्रयत्रभ

ाहंभवामित्रिदशैःसह ॥४४॥ तत्रसर्वाणितीर्थानिनदीनदसरांसिच ॥ य
॥४५॥ श्रोतव्यंममशास्त्रंहियशोधर्मजयार्थिना ॥ पापक्षयार्थंलोकेशमो
गवतंपुण्यमायुरारोग्यपुष्टिदम् ॥ पठतःशृण्वतोवापिसर्वपापैःप्रमुच्यते ॥४७॥
गवतंपरम् ॥ नित्यंनित्यंहिलोकेशतेषांस्वामीसदायमः ॥ ४८॥ नगच्छंतिसदामर्त्या
दृश्यांविशेषेणनास्तिपापक्षयस्तथा ॥४९॥ श्लोकंभागवतंचापिश्लोकार्धंपादमेवच ॥ लि
तस्यवसाम्यहम् ॥५०॥ सर्वाश्रमाभिगमनंसर्वतीर्थावगाहनम् ॥ नतथापावनंनृणांश्रीमद्भा
॥ यत्रयत्रचतुर्वक्त्रश्रीमद्भागवतंभवेत् ॥ गच्छामितत्रतत्राहंगौर्यथासुतवत्सला॥५२॥ मत्कथावाच
कथाश्रवणेरतम् ॥ मत्कथाप्रीतमनसंनाहंत्यक्ष्यामितंपरम् ॥ ५३ ॥ श्रीमद्भागवतंपुण्यंदृष्ट्वानोत्तिष्ठतेहि
संवत्सरात्मकंपुण्यंविलयंयातिपुत्रक ॥ ५४ ॥ श्रीमद्भागवतंदृष्ट्वाप्रत्युत्थानाभिवादनैः ॥ सन्मानयेत्तुतं
भवेत्प्रीतिर्ममातुला ॥ ५५ ॥ दृष्ट्वाभागवतंदूरात्प्रक्रमेत्संमुखोहियः ॥ पदेपदेश्वमेधस्यफलंप्राप्नोत्यसं
शयम् ॥ ५६ ॥ उत्थायप्रणमेद्योवैश्रीमद्भागवतंनरः ॥ धनंपुत्रांस्तथादारान्भक्तिंचप्रकरोम्यहम् ॥ ५७ ॥
महाराजोपचारैश्चश्रीमद्भागवतंसुत ॥ शृण्वंतियेनराभक्त्यातेषांभवाम्यहम् ॥ ५८ ॥ ममोत्सवेषुसर्वेषुश्रीम
द्भागवतंपरम् ॥ समर्चयंतिभक्त्यायेममाभेदेनसुव्रत ॥ ५९ ॥ वस्त्रालंकरणैःश्रेष्ठैर्धूपदीपोपहारकैः ॥ वशीकृ
तोदृढंवत्सससत्स्रियासत्पतिंयथा ॥ ६० ॥ ॥ इतिश्रीस्कन्दपुराणेमार्गशीर्षमाहात्म्येपंचदशोध्यायः॥ १५ ॥
॥ ब्रह्मोवाच ॥ कस्मिन्तीर्थेहिदेवेशमार्गशीर्षोधिकःस्मृतः ॥ किंफलंलभतेतस्मिन्एतत्सर्वंवदस्वमे ॥ १ ॥

म॰ श्रीभगवानुवाच ॥ मथुरेतिसुविख्यातंअस्तिक्षेत्रंपरंमम ॥ सुरम्याचप्रशस्ताचजन्मभूमिःप्रियामम ॥ २ ॥ पदे माहा॰
पदेतीर्थफलंमथुरायांचतुर्मुख ॥ यत्रयत्रनरःस्नातोमुच्यतेघोरकिल्बिषात् ॥ ३ ॥ सर्वधर्मविहीनानांपुरुषाणांदु
॥२३॥ रात्मनाम् ॥ नरकार्तिहरापुत्रमथुरापापनाशनी ॥ ४ ॥ कृतघ्नश्चसुरापश्चचोरोभग्नव्रतस्तथा ॥ मथुरांप्राप्य
मनुजोमुच्यतेघोरपातकात् ॥५॥ सूर्योदयेतमोनश्येद्यथावज्रभयान्नगाः ॥ तार्क्ष्यंदृष्ट्वायथासर्पामेघावातहतायथा
॥६॥तत्त्वज्ञानाद्यथादुःखंहरिंदृष्ट्वायथामृगाः ॥ तथापापानिनश्यंतिमथुरादर्शनात्सुत ॥७॥ श्रद्धयाभक्तियुक्तस्तु
…दामधुपुरींनरः ॥ब्रह्महापिविमुच्येतकिंपुनस्त्वन्यपातकि ॥८॥ मथुरास्नातुकामस्यगच्छतस्तुपदेपदे॥ निराशा
फ… नायेवपापानिचशरीरतः ॥९॥ अनुषंगेणगच्छंतिवाणिज्येनापिसेवया ॥ मथुरास्नानमात्रेणपापंत्यक्त्वादिवंव्र
यःपुनः … नामानिगृण्हतामस्याःसदैवत्वंनसंशयः ॥ सदाकृतयुगंतत्रसदाचैवोत्तरायणम् ॥११॥यःशृणोतिचतुर्व
यतेयदि ॥ …ह्वलम् ॥ अन्येनोच्चारितेनैवसोपिपापात्प्रमुच्यते ॥ १२ ॥ त्रिरात्रमपियेतत्रवसंतिमनुजाःसुत ॥
हस्त्राणिपच्यते …ध्याष्टाश्वरणरेणवः ॥ १३ ॥ अथतृणसमूहंतुज्वलयंतिस्फुलिंगकाः ॥ तथामहांतिपापानिदहतेम
त्पदम् ॥ ३३ ॥ …निर्भवेत्तीर्थानांयस्मात्सुकृतसंचयः ॥ ततोधिकतरंप्रोक्तामथुरासर्वमंडले ॥१५॥ सर्वेषामपि
गरेममयःकुर्याद्भक्त्य …र ॥ …तत्पुण्यंजायतेतेषांमथुरांस्मरतांसताम् ॥१६॥ अन्यत्रहिकृतंपापंतीर्थमासाद्यनश्यति॥
तफलंकथितंमम ॥ नत… सप्तजिति ॥१७॥धर्मार्थकाममोक्षार्थंस्थित्वातत्रलभेन्नरः ॥ अन्यत्रदशाभिवर्षैःप्रारब्धं ॥२३॥
विमानकोटिसंयुक्तंआकल्पंवस… पमितंवंक्रमाथुरेदशाभिर्दिनैः ॥ नविद्यतेचपातालेनांतरिक्षेचमानुषे ॥१९॥ समं
श्वेतद्वीपेवसेन्नरः ॥ ३८ ॥ तस्मा… मू. …त्वतीर्थानांमाथुरंपरमंमहत् ॥ २० ॥ बालक्रीडानिरूपाणिकृतानिसह

॥नेच ॥२१॥ यत्फलंभारतेवर्षेयत्फलंमथुरांस्मरेत् ॥ सनिहत्याशुयत्पु
फलभेत्पुत्रमथुरायांदिनेदिने ॥ पूर्णेवर्षसहस्रेतुतीर्थराजेषुयत्फलम्॥२३॥
वापु॥ पूर्णेवर्षसहस्रेतुवाराणस्यांतुयत्फलम् ॥२४॥ तत्फलंलभतेपुत्रमथुरायांस
कनरोयःक्षेत्रेकुरूणांक्षितिदायकोयः॥२५॥षण्मासकात्साधयतेगयायांसमंभवेन्मेदिनमे
काशिकांचीनमायागदाधरोयस्यसमंनतीर्थम्॥२६॥संतर्पितायद्यमुनाजलेनवांछंतिनोवैपि
पुरांयेप्रकुर्वंतिपुरीसाधारणीदृशम् ॥ २७ ॥ येनरास्तेपिविज्ञेयाःपापराशिभिरन्विताः ॥ नदृष्टा
यस्यजायते ॥२८॥ यत्रतत्रमृगस्यापिमाथुरेजन्मजायते ॥ भूमौरजांसिगणनाकालेनापिभवे
॥ माथुरेयानितीर्थानितेषांसंख्यानविद्यते ॥ कुरुभोकुरुभोवासंमथुरायांपुरींप्रति ॥३०॥ वस्राभिय
गोपकन्याभिरावृतः॥ रेमेसंसारमग्नानांशिक्षामेकांतुमेशृणु॥३१॥ यदिच्छसिसुखंसांद्रंवासंकुरुत्तम
होलोकोमहानंधोनेत्रहीनोनपश्यति॥३२॥ माथुरेविद्यमानेपिसंसृतिंभजतेसदा॥ मानुषीयोनिमतुलां
ग्यस्ययोग्यतः॥३३॥वृथैवायुर्गतंतेषांनदृष्टामथुरापुरी॥अहोमतेःसुदौर्बल्यंअहोभाग्यस्यदैविधम्॥३४॥
अहोमोहस्यमाहिमामथुरानैवसेव्यते ॥ मथुरांचपरित्यज्ययोन्यत्रकुरुतेरतिम् ॥ ३५ ॥ मूढोभ्रमतिसंसारेमोहि
तोममममायया॥ मथुरामपिसंप्राप्ययोन्यत्रकुरुतेस्पृहाम्॥३६॥दुर्बुद्धेस्तस्यकिंज्ञानंसोज्ञानेनविभज्यतः ॥ मात्रापि
त्रापरित्यक्तायेत्यक्तानिजबंधुभिः॥३७॥ येषांक्वापिगतिर्नास्तितेषांममपुरीगतिः ॥पापराशिभिराक्रांतायेदारिद्र्यपरा
जेताः ॥३८॥ येषांक्वापिगतिर्नास्तितेषांममपुरीगतिः ॥ नतत्पुण्यैर्नदानैस्तन्नतपोभिर्नतज्जपैः ॥३९॥ नलभ्यं

विविधैर्योगैर्लभ्यंमदनुभावतः ॥ मयितेषांस्थिराभक्तिर्भूयसीयेषुमत्कृपा ॥४०॥ तेषामेवहिधन्यानांमथुरेयंभवेद्ध माहा०
॥२३॥ तेः ॥ यागतिर्योगयुक्तस्यब्राह्मणस्यमनीषिणः ॥ ४१ ॥ सागतिस्त्यजतःप्राणान्मथुरायांनरस्यच ॥ काश्यादिपु
र्योयादिसंतिलोकेतासांतुमध्येमथुरैवधन्या ॥ ४२ ॥ याजन्मनोर्जीवितमृत्युदाहैर्नृणांचरुद्राविदधातिमुक्तिम् ॥
तपोभिर्यागतिर्लभ्यामन्वंतरशतैरपि ॥४३॥ अत्रहेलनयासात्रलभ्यतेमत्प्रसादतः ॥ नपापेभ्योभयंयत्रनभयंयत्र
स्यप्र… मधुपु ॥४४॥ नगर्भवासभीर्यत्रतत्क्षेत्रंकोनसंश्रयेत् ॥ मथुरायांचयत्पुण्यंतस्यपुण्यफलंशृणु ॥४५॥ मथुरायां
चदक्षि… कश्चिन्म्रियतेयदि ॥ अपिकीटपतंगोवाजायतेसचतुर्भुजः ॥ ४६ ॥ अपिकीटपतंगाद्यामथुरायांमृता
फल… नायस्तु …त्पुनंतियेवृक्षास्तेपियांतिपरांगतिम् ॥४७॥ मूकाजडांधबधिरास्तपोनियमवर्जिताः ॥ कालेनैवमृ
यःपुनः… यतेयदि ॥ …रेममलोकगाः ॥४८॥ सर्पदष्टापशुहताःपातकांबुनिवासिताः ॥ लब्धापमृत्यवोयेचमाथुरेममलोकगाः
हस्राणिपच्यते… सत्यंमुनिश्रेष्ठब्रुवेशपथपूर्वकम् ॥ सर्वाभीष्टप्रदंनान्यत्मथुरायाःसमंक्वचित् ॥५०॥ त्रिवर्गदाका
त्पदम् ॥ ३३ ॥ …मोक्षदा ॥ भुक्तिमुक्तिप्रदांकस्तांमथुरांनाश्रयेद्बुधः ॥५१॥ एकादशीमधुपुर्यांकर्तव्यामार्गशीर्षके ॥
गरेममयःकुर्याद्भक्त्य… यंविधिपूर्वकम् ॥ ५२ ॥ श्रेष्ठंवैब्राह्मणःकुंडंमध्येकुंडंचवैष्णवम् ॥ कनिष्ठंरुद्रदैवत्यमिति
त्फलंकथितंमम ॥ नत… ३॥ एषुस्नानंयथाज्ञानंश्राद्धंवैबुद्धिपूर्वकम् ॥ पूजाचमहतीकार्याममप्रीतिकरासुत ॥५४॥ ॥२४॥
विमानकोटिसंयुक्तंआकल्पंवस… रमप्रियम् ॥ तस्यांयत्क्रियतेपुण्यंममप्रीतिकरंभवेत् ॥५५॥ स्वर्णदानंचगोदानंअन्नदा
श्वेतद्वीपेवसेन्नरः ॥ ३८ ॥ तस्मा… विधिपूर्वकम् ॥५६॥ सहोमासेतुपूर्णायांसम्यग्दानंतुकारयेत् ॥ ब्रह्मभोज्यंप्रक
…म् ॥ …वकर्तव्यंउत्सवंव्रतपूर्तये ॥ यादृशीमथुरापुत्रसहोमासेममप्रिया ॥५८॥

पुष्करेमथुरायांवैपूजाकार्याविचक्षणैः ॥५९॥यत्रकुत्रापिवाकार्याविधियु
र्यायांनकरोतियः ॥ ६० ॥ षष्टिवर्षसहस्राणिरौरवेपरिपच्यते ॥ तस्मा
...॥ ६१ ॥ मार्गशीर्षेणसंयुक्तांअनंतफलदायिनीम् ॥ करोतियोनरोभक्त्यात
॥ सर्वयज्ञेषुयत्पुण्यंयत्फलंव्रतकोटिभिः ॥ सर्वदानेषुयत्पुण्यंतत्फलंसमवाप्नुयात् ॥
दुःप्राप्यंत्रिषुलोकेषुमानद ॥ तत्सर्वंप्राप्नुयान्मर्त्योसहोमासेनसंशयः ॥ ६४ ॥ यद्यप्येते
वाःसुत ॥ तुष्टाश्चंतेचतुर्वक्त्रनकामाहोमहाभुज ॥ ६५ ॥ अतिदुर्लभाहियद्भक्तिर्मंमवश्य
संप्राप्यतेपुत्रसहोमासेनसंशयः ॥ ६६ ॥ ममप्रीतिकरंमासंसर्वदाममवल्लभम् ॥ सर्वसंप्राप्य
सादाच्चतुर्मुख ॥ ६७ ॥ ॥ इतिश्रीस्कंदपुराणेमार्गशीर्षमाहात्म्येषोडशोध्यायः ॥ १६ ॥
माहात्म्यं समाप्तम् ॥ ॥ श्रीरस्तु ॥ ॥ शुभंभवतु ॥ ॥ ॥ छ ॥ ॥ छ ॥

इदं श्रीस्कन्दपुराणान्तर्गतं मार्गशीर्षमाहात्म्यं गोपाळनारायणमण्डलेन मुम्बय्यां

स्वकीये यन्त्रालये १८०९ तमे शकाब्दे तथा १८८७ तमे

ख्रिस्ताब्दे मुद्रितम्

मा

नदा
फ नाय
यःपुनः आ
यतेयदि ॥
हस्राणिपच्यते ध्या
त्पदम् ॥ ३२ ॥ निर
गरेममयःकुर्याद्भक्त्य ॥
त्फलंकथितंमम ॥ नत
विमानकोटिसंयुक्तंआकल्पंवस भदा
श्वेतद्वीपेवसेन्नरः ॥ ३८ ॥ तस्मा म् ॥

प ९८

॥ इति मार्गशीर्षमासमाहात्म्यं समाप्तम् ॥

